March, 1943 Reg. No. C. 1073



सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः

संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्



# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

March, 1943 | १८६४-शकीये फाल्गुने | २५श-वर्षस्य ११श-संख्या | Vol. XXV No. 11

## उपनिषदामद्वैतपरता

( पूर्वानुवृत्तिः )

विशिष्टाद्वैतिनां वा विवरणमभिन्ननिमित्तोपादानताभिप्रायनिबन्धनं न युक्तम् ब्रह्मणः केवलनिमित्तकारणताया एव स्वीकारस्योचितत्वादिति श्रीमदानन्द-तीर्थाचार्याशय इति फलति। अत्र इदं सर्वं प्रकृतिगमीशावास्यमित्यतोऽधिकं किमपि—"तेन त्यक्तेन भुञ्जीथा" इत्यादिना न प्रतिपाद्यते। तदधीन-स्वरूपत्वस्योक्तयैव सर्वेषु लाभात। इदं सर्वं जगत प्रकृतिगमिति प्रकृति-गत्वोल्लेखस्तु—यदि जगतकोटौ प्रकृतेरप्रवेशं मत्वा, तर्हि प्रकृतेरीशा-धीनत्वमत्रानुक्तं भवति, यदि तु प्रवेशं मत्वा, तर्हि जगत्यां जगदिति वितथम्, अद्वैतमते तु सर्वं प्राकृतमेव ब्रह्मव्यतिरिक्तं ब्रह्मव्यतिरेकेणाभावात मिथ्याभूतमिति सूचनेन हिरण्यगर्भलोकान्तस्य वैराग्ययोग्यतासूचनार्थतया

सर्वमुपपद्यते। "तेन त्यक्तेने"त्यत्र तेन-पदेन पूर्ववाक्यप्रधानतया प्रस्तुतं जगत्परित्यज्याप्रधानस्येशस्य परामर्शः, तेन त्यक्तेनेत्यनयोर्वैयधिकरण्येनान्वयश्चापि दोषो दुरपह्नव एव स्यात्। "मया ततमिदं सर्वं जगदव्यक्तमूर्तिने"ति भगवद्गीतावाक्येनैकवाक्यताभावोऽप्यत्र मते समापतति।

"स्वतः प्रवृत्त्यशक्तत्वादीशावास्यमिदं जगत।" इति ब्रह्माण्डपुराणवचनं तु घटादीनां प्रवृत्तिपर्यन्तव्यवहारगोचरत्वमपि सविकल्पकज्ञानविषयाणामधिष्ठानविधया ब्रह्मणोऽनुगमे प्रमाणमित्येवमेवाशयम्, अत एव—"प्रवृत्तये प्रकृतिगं यस्मात्" इति प्रकृत्यधीनतयैव जगतः प्रवृत्तिगोचरत्वं प्रतिपाद्यते। प्रकृत्यधीनतयैव प्रवृत्तिगोचरत्वमीशावास्यत्वे कुतो निमित्तमिति शङ्कावारणार्थं तु—"स-प्रकृतोश्वर" इति वाक्यशेषः। तथा च प्राकृतानां मिथ्याभूतानामपि वा प्रवृत्तिगोचराणामधिष्ठानतया ब्रह्मानुवेधो योज्य एवेति फलति। "तदधीनप्रवृत्तित्वात्तदीयं सर्वमेव तत्" इति तु ईशावास्यमित्यनेनापुनरुक्तार्थम्, प्रकृतिगम्, प्रकृतिगोचर इति च प्रस्तुतप्रकृत्यधीनत्वात् प्राकृतत्वं मायिकत्वापरपर्यायमेव प्रतिपादयति। तद्दत्तेनैव भुञ्जीथाः इति तु "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुत्यर्थ एव परमं तात्पर्यं तेन त्यक्तेन भुञ्जीथा इत्यस्येति बोधयति। तेन च स्वरूपतो न पुरुषार्थकं जगतः, किन्तु नैराश्यमेव सर्वमर्हतीति विशदीभवति। तथा चाद्वैताभिमते विवरण एवोक्तब्रह्माण्डपुराणवचनानामपि श्रीमदानन्दतीर्थसंगृहीतानां तात्पर्यम्। "तृष्णाविच्छेदवत स्वोचितकर्मानुष्ठानमप्यावश्यकं ज्ञानार्थिनामि"ति अत्र जयतीर्थविवरणम्, प्रथममन्त्रे वैराग्यरूपाधिकारप्रतिपादनानन्तरं द्वितीये मन्त्रे तत्त्वं प्रतिपाद्यत इति श्रीरघुनाथतीर्थटीका च "तेन त्यक्तेने"त्यस्याद्वैताभिमतं विवरणमेव हृदयेन समाद्रियते।

यत्तु श्रीभागवतेऽष्टमादौ—"आत्मावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्।" इति प्रकृतमन्त्रसमानक्रमः श्लोकः, तेनाप्यद्वैताभिमत एवार्थोऽवबोध्यते। अत एव —"धत्तेऽस्य जन्माद्यजयाऽऽत्मशक्त्या तां विद्ययोदस्य निरीह आस्ते" इति

अनाद्यविद्यानाशेन विद्याधीनेन निरीहतयाऽवस्थानमेव परमात्मनः स्वभाव इत्युत्तरत्र तत्रैव प्रतिपादितमुपपद्यते। अनेन हि ब्रह्मणोऽपि जगद्व्याप्तित्वं तत्कारणप्रकृतिद्वारकमेव, जगतश्च ब्रह्मविवर्ततया न प्रेमयोग्यतेत्यादिकमेव प्रतिपाद्यते। नहि सर्वजगत्कारणमात्मशक्तिरजा विनश्वरा च काचित् अद्वैतमतं विहायान्यत्र वर्तते।

यत्तु श्रीजयतीर्थटीकायाम्—अज्ञवत् ज्ञानिनोऽपि भगवत्पूजात्मक-स्वकर्माकरणे पापलेशसद्भावेन नात्र सर्वकर्मत्यागो विवक्षितः। ईशा-वास्यत्वस्य कर्माकरणाहेतुत्वात्। आच्छाद्याच्छादकयोरभेदस्यादृष्टपूर्वत्वा-न्नात्राद्वैतज्ञानविवक्षेति वर्णितम्, तदिदमद्वैतभाष्यकारैर्जगन्मिथ्यात्ववाद एवास्य तात्पर्यम्, तथाच नित्यानित्यवस्तुविवेकादिद्वारा सर्वकर्मत्यागोप-योगित्वमित्येवाभिप्रेतत्वाद् नोपपद्यते। यथा चाद्वैतमतेऽपि—नाश्रमधर्म-त्यागोऽपि त्यागशब्दार्थः किन्तु यज्ञादिकर्मत्याग एव, तेन च कर्मविचार-पूर्ववृत्ततया नेहैव जन्मनि नियम इत्येव विवक्षितम्, तथाऽन्यत्र व्यक्तम्। तथाच—"कुर्वन्नेवेह कर्माणी"ति विषयान्तरपरम्, नतु ज्ञानिनामपि कर्मानु-ष्ठाननैयत्यनिरूपणपरम्। अत एव—"असुर्या नामे"ति तृतीयमन्त्रेण कर्म-निन्दोपपद्यते। यो जिजीविषेत्, स कुर्वन्नेवेह कर्माणि तिष्ठेदित्येव मतद्वयेऽप्यर्थः, इयान् विशेषः—यत्—कर्मात्र विधीयमानं ज्ञानिनोऽप्युद्दिश्य भगवत्पूजनात्मकमेव विवक्ष्यते, इति द्वैतमतम्, अद्वैतमतं तु कर्म-सामान्यमज्ञानेनाधिकृत्य विधीयत इति।

तथाच—आप्रायणं जीवन्मुक्तानामपि कर्मानुष्ठानं यद्यत्र विधित्सितं द्वैत-मतरीत्या, तर्हि जिजीविषेदिति निमित्तानुवादो वितथ एव स्यात्। अतोऽज्ञ-विषय एवायं मन्त्रः, नतु ज्ञानार्थिविषयकोऽपि। अत एव—प्रथमे मन्त्रे वैराग्यं प्रतिपाद्यत इति द्वैतसिद्धान्तोऽप्युपपद्यते। अन्यथा—भगवत्प्रीणनाख्य-कर्मणामविरक्तानधिकारिकत्वाद् वितथः प्रथमो मन्त्र आपद्येत द्वैतमते, अद्वैत-मते तु प्रथमेन संन्यासयोगः, द्वितीयेन कर्मयोगश्च प्रतिपाद्यत इति न तस्य वैयर्थ्यम्। "असुर्या नामे"ति मन्त्रस्तु—कर्मयोगमात्रमोक्षद्वारता-

वादिनां निरासार्थः, तस्य ज्ञानयोगेनासमुच्चयव्यवस्थापनार्थश्च। तथा चाद्वैतमते कर्मफलनिष्कर्षप्रतिपादनार्थस्तृतीयो मन्त्रः, द्वैतमते तु—अपरमात्मविनिन्दापर इति विशेषः फलति। अत्र च प्रथमद्वितीययोः परमात्मविदामप्रकृतत्वात् अपरमात्मविन्निन्दा न परमात्मवितस्तुत्यर्थतयाऽप्युपपद्यत इति मन्तव्यम्। "अताम्रे ऋषयः कर्माणीहन्तेऽकर्महेतवे। ईषयान्ते हि पुरुषः प्रायोऽनीहां प्रपद्यते" इति श्रीमद्भागवताष्टमस्कन्धादौ श्लोकोऽपि "कुर्वन्नेवेह कर्माणीति मन्त्रस्येहमानाधिकारिविषयत्वमेव विशदयति, नतु ज्ञानार्थिनं विरक्तं चेति द्वैतिनां प्रधानोपष्टम्भाष्टमस्कन्धादिरपि केवलाद्वैतवादमेवात्र समाद्रियन्ते। "अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः। ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम्" इति नारदीयवचने ज्ञानिनोऽपीति वाक्यशेषस्त्वर्थवाद एव। न हि ज्ञानातिरिक्तं कृष्णोपासनं नामापरमस्ति, येन ज्ञानिनः कृष्णोपासनराहित्यमभ्याहतं स्यात्। कृष्षोपास्तिमकुर्वत इत्यत्र स्वकर्मणेत्यध्याहारेणोक्तश्लोकस्यान्यथा नयनं तु क्लिष्टतरत्वान्न समादरमर्हति।

अनेजदेकमिति तुरीयो मन्त्रस्तत्त्वप्रतिपादनपर इति संप्रतिपन्नम्। तत्र द्वैतादिमते तदुपास्यं फलं तत्साधनं वा ब्रह्म बोध्यत इति मन्यते, अद्वैतमते तु ज्ञेयस्वरूपमात्रं प्रतिपाद्यत इति। तत्र ब्रह्मण एव प्रतिपाद्यत्वमिष्टत्वं चेति ज्ञानमात्रेण शास्त्रसमाप्तिपक्ष एव संभवति, नतूपास्यतया शास्त्रसमाप्तिपक्षे, तत्पक्षेऽपि यद्यपि फलत्वेनोपास्यत्वेन च पृथग्निर्देशे उभयत्वमपि न विरुद्धम्; तथाप्यत्र नोपास्यतया फलतया च ब्रह्म निर्दिश्यते, किन्तु तत्स्वरूपमात्रं बोध्यत इति कण्ठचामीकरन्यायेनाज्ञाननिवृत्त्यैव ब्रह्मप्राप्यतापक्ष उपपद्यत इति वक्तव्यम् इदं च न द्वैतमतरीतौ संभवति। तैरुपास्यतयैव ब्रह्मणो मोक्षसाधनत्वस्य स्वीकारात्। एतेन—कार्यपरमेव पर्यवसितम्, तदेव च प्रमाणम्;

(क्रमशः)

# संस्कृत-नाटकानि

[ निबन्धकः—वि॰ कृष्णस्वाम्ययय्यङ्गार्यः ]

( पूर्वानुवृत्तिः )

प्रकृतमनुसरामः। मिश्रं नामेतिवृत्तं प्रख्यात एवेतिवृत्ते कविना रसानुगुण्येन किञ्चिद्विपर्यासे प्रख्यायते। उत्पाद्यन्तु सर्वथा कविकपोलकल्पितमेव। आधुनिकानामन्तिममेव प्रियतममानन्ददायि च दृश्यते।

नाटकीयं संप्रदायमनुसृत्य प्रयाण-स्नान-भोजन-शयनादीनां प्रदर्शनार्हता अर्थोपक्षेपकाः नास्तीति कथमेषां सूचनम्? एतेषामसूचने तूत्तरत्र कथाभागस्य स्पष्टतया प्रतिपत्तेरसाध्यत्वात्। राज्यविप्लवस्य समरसमारम्भस्य प्रतिनायकवधस्य चेत्यादीनां प्रदर्शयितुमशक्यानां वृत्तान्तानामसूचने नाटकाभिनयस्य नीरसत्वापत्तेरिति शङ्का विमर्शकानामुदियाय। अत्रोपायानन्वेषयन्तः शास्त्रकाराः सूचनाक्रमं पञ्चविधमन्वशासुः। 'विष्कम्भचूलिकाङ्कास्यप्रवेशाङ्कावतारण'रूपाश्चैते पञ्चार्थोपक्षेपकाभिधानास्सूचकसंनिवेशाः प्रसिद्धाः। मध्यपात्रप्रयोजितो वृत्ताया वर्तिष्यमाणायाश्च कथायाः सूचकस्संक्षिप्तसम्भाषणरूपो विष्कम्भः। नेपथ्यान्तर्वर्तिभिरेव पात्रैरर्थसूचने चूलिका। अङ्कान्ते रंगमंचमधितिष्ठद्भिः पात्रैर्घटनाचातुर्येणोत्तराङ्कार्थस्य सूचनमङ्कास्यम्। विष्कम्भतुल्ययोगक्षेमो नीचपात्रप्रयोजितो वृत्तवर्तिष्यमाणकथासूचकः प्रवेशकः। आद्येऽङ्केऽपि विष्कम्भस्य प्रयोगो लाक्षणिकैरनुमतः, यथा मालविकाग्निमित्रे प्रथमाङ्क एव बकुलावलिकायाः कौमुदिकायाश्च संवादः। प्रवेशकस्तु न कुत्राप्याद्यमङ्कमलङ्करोतीति तु स्पष्टमेव। यतो हि प्रतिषिषिधुः शास्त्रकाराः—'प्रवेशकस्तु नाद्येऽङ्के' इति। उत्तराङ्कपात्राणामसूचनेऽपि पूर्वाङ्कार्थसम्बद्धाया एव कथाया मध्ये वृत्तान्तान्तरविरहादनुवर्तनमङ्कावतारणम्। अस्मिंश्चोत्तराङ्के नूतनानि

पात्रान्तराणि नैव प्रविशन्ति। तत्र विष्कम्भो द्वेधा। मध्यम-नीचपात्राभ्यां प्रयोजितो मिश्रविष्कम्भः, उभाभ्यामपि मध्यमाभ्यामेव पात्राभ्यां प्रयोजितस्तु शुद्धविष्कम्भः। एभिरुपक्षिप्तोऽर्थस्सूक्ष्मदर्शिभि-र्विज्ञातः कथामनुवर्तयति। अर्थोपक्षेपकाणामुपयोगो हि कथाया अविच्छेद-सम्पादनायैव।

तत्र कानिचिद्वचनानि श्राव्याणि स्मर्यन्ते; कानिचिदश्राव्याणि च। स्वगतादिकम् 'प्रकाश'मिति निर्दिष्टानि वचनानि सर्वेषां श्रवणमर्हन्ति। स्वगतन्तु पात्रान्तराणामनाकर्णनीयम्। जनान्तिकं नाम पात्रान्तरेण साकं सम्भाषणम्, मत्सम्बोधितपात्रादन्यन्न श्रोतुमर्हति। अपवारितं पृष्ठतो वदनं परिवृत्य गुप्तरीत्या संभाषणम्। आकाशभाषितं नाम पुरतोऽस्थितं पात्रमुद्दिश्य 'किमाह भवान्' इत्यादिरीत्या स्वयमेव सम्भाषणनिर्वाहः। एतानि च नाटकेष्वावश्यकानि, सम्भाषणपद्धतेर्नाटकेष्वेवोपयोगात्।

कथाविस्ताराय पञ्चार्थप्रकृतय उपयुज्यन्ते। बीजं बिन्दुः पताका प्रकरी अर्थप्रकृतयः कार्यञ्चेतीमा अर्थप्रकृतयो व्यपदिश्यन्ते। बीजञ्च कथामूलभूतः कश्चन स्तोकोद्दिष्टो वृत्तान्तः, यः प्रासंगिकानां वृत्तान्तान्तराणामुपसम्बन्धा-द्विस्तृतरूपः कार्यहेतुर्भवति। कार्यं हि नाम फलावाप्तिसाधनमन्तिमः प्रयत्नः। तत्र च फलावाप्तीच्छाया एव कारणत्वात्सैव बीजपदेनोच्यते। तस्याश्चेच्छायाः कस्मिन्संनिवेशे कदा कथमुत्पत्तिरभवदिति कथांशस्य निरूपणमेव नाटकस्यादिमे भागे प्रधानतमम्। यथा मालविकाग्निमित्रे नायकस्य मालविकायामभिलाषो बीजभूतः कविना सचमत्कारं विष्कम्भे सूचितः, संघटितश्च तदनुकूलश्चित्रशालायां देव्या सह राज्ञो नायकस्य नूतनचित्रप्रेक्षणादिः संनिवेशः। मध्ये प्रसङ्गादागतैर्व्यापारान्तरैर्नायकस्य प्रधानव्यापाराविस्मरणाय संयोज्यमानो विच्छिन्नां प्रधानकथामनुवर्तयिता बिन्दुः। यथा मालविकाग्निमित्रे हरदत्तगणदासयोः परस्परविज्ञानसंघर्षे 'प्राश्निकपदमध्यासीनायै पण्डितकौशिक्यै मालविका स्वीयमभिनयपाटवं दर्शयतु, न तु राज्ञः सांनिध्ये' इति राज्ञो मालविकादर्शनं परिजिहीर्षौ

धारिणीदेव्यां वदन्त्यां, सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषायेति प्राश्निक्याः प्रतिवादाद् देवी क्रोधमाहारयामास, तस्याः क्रोधशान्तिमन्तरा कथा नानुवर्तितुमलम्, तत्र विदूषकस्य "ननु कारणादेव। आत्मनः पक्षो रक्षितव्य इती" त्यनेनोपालम्भपरिहासेन जातस्पर्धाबुद्धेर्देव्याः क्रोधनिवृत्तिर्भवतीति तत्र विदूषकोक्तिरविच्छेदकारणं बिन्दुः। प्रकरी-पताके च प्रागेव निरूपिते। कार्यं फलावाप्तिकारणं नाटकान्तनिबद्धो नायकगतस्तत्सहकार्यमात्यादिगतो वा प्रयत्नः। आरम्भयत्नप्राप्त्याशानियताप्ति-
 अवस्थाः    फलागमात्मिकानामवस्थानां स्वरूपमपि लाक्षणिकैर्यथावन्निरूपितम्। भूयसे फललाभायौत्सुक्यमेवारम्भावस्था। तादृश्यामेवावस्थायां कार्यहेतोर्बीजस्याप्युन्मेषेण कथारम्भात्। उद्दिष्टरीत्या निष्प्रत्यूहमिष्टानवाप्तौ स्वाभिलषितसिद्धये नायकेनास्थीयमानस्त्वरान्वितो व्यापारो यत्नः। त्वरा चात्र यत्नविलम्बादिष्टलाभावकाशस्यैव व्युच्छेदो मा संपादीत्यर्थम्। एतस्यामवस्थायां हि नायकस्येष्टलाभे महीयस्याकाङ्क्षा (Ankiety) त्वरां निसर्गतः प्रयोजयति। प्रयत्नानन्तरञ्च कृतिसाध्यताज्ञानस्य निर्णयात्मकस्योपायापायानां सम्यग्विमर्शाज्जातस्य समवधानादिष्टप्राप्तौ विश्वासः प्राप्त्याशा। आरब्धोद्योगस्यापि पुंसो विघ्नबाहुल्यादिज्ञानेऽभीष्टार्थावाप्तौ कृतिसाध्यत्वज्ञानं व्युदस्येत इत्यतस्तद्विषयिण्युत्तरकालिकी प्रवृत्तिर्बाध्येत, अतस्तत्र सहकारिविरोधिसामग्रीणां याथातथ्येनावधारणात् प्राप्तिसम्भवविनिर्णयोऽप्यपेक्ष्यते। निर्णीते च कार्यसम्भवे तत्र प्रवृत्तिरधिकारप्राप्ता न विरुध्यत इत्याकूतम्। अपायाभावज्ञानात्फलप्राप्तेर्दुष्प्रतिबन्धत्वज्ञानं नियताप्तिः। प्राप्त्याशायां कृतिसाध्यतानिर्णयमूलकस्य प्राप्तिसम्भवनिर्णयस्य सत्त्वेऽपि नियताप्तावपायात्यन्ताभावबुद्धिकृतः प्राप्तिनिर्णय एवेति विशेषः। प्राप्त्याशायां सम्भवपदेन सम्भावनाकोटिमाटीकमानस्य प्रबलप्रमाणान्तरसहकारान्निर्णयपदवीं प्रविष्टस्य प्राप्तिसम्भवज्ञानस्य सत्त्वात्। इह तु प्राप्तिरेव निर्णयविषय इत्यनयोर्भेदादित्यादि केनचित्पण्डितंमन्येनाभ्यधायि। वस्तुतो हि प्राप्त्याशावस्थायां प्राप्ति-

सम्भावनामात्रम्, न विनिर्णयः। नियताप्तेरनतिरिक्तत्वापत्तेः सम्भावना-समानस्थानापन्नो निर्णय इत्यस्य स्वव्याघातदोषाक्रान्तत्वात्। न हि सम्भावनाया निर्णयरूपत्वं निर्णयस्य वा संभावनारूपत्वं क्वचित्प्रामाणिकैः प्रतीयते। प्राप्तिसम्भवनिर्णयः प्राप्तिनिर्णयात्कस्मिन्नंशे भिद्यत इत्यप्येष कुतर्कवाचस्पतिः प्रष्टव्यः। एतच्च संस्कृतभाषानभिज्ञानमूलकमाटोपविष्टम्भितमिति नास्माकमत्र चोद्यावकाशः। फलागमश्च प्रधानीभूतेष्टलाभरूपफलनिर्वृत्तिः। समग्रफलसम्पत्तिरिति यावत्। एतासामवस्थानामर्थप्रकृतिभिस्साकमभिसम्बन्धात्पञ्च सन्धयो निर्वर्तन्ते। मुखं प्रतिमुखं गर्भोऽवमर्शो निर्वहणञ्चेत्येते पञ्च सन्धयः। विस्तरस्त्वन्यत्र द्रष्टव्यः।

मुखगर्भसन्ध्योः प्रत्येकं त्रयोदश, प्रतिमुखावमर्शसन्ध्योः प्रत्येकं संध्यङ्गानि चतुर्दश, उपसंहारसंधौ (एष एव निर्वहणसन्धिरन्तिमः) चतुर्दशेत्याहत्य षट्षष्टिरंगानि विद्यन्ते। सर्वाण्यप्येतान्यंगानि प्रयोक्तव्यान्येवेति न नियमः। अपि तु यथोचितमुपयोगान्नाटकस्य शोभासम्पदभिवर्धनीया। विद्यानाथेन समग्राङ्गमविकलसन्धिनाटकमुदाहृतम्। परन्तु तत्र नाटकीयानां नियमानां सावधानमनुपालनेऽपि न वाचकानामादरः सत्कारो वा। तत्र कारणञ्च वाचकहृदयस्पर्शिनो रसस्यानिष्पत्तिरेव। नियमानुरोधमात्रेण रसोत्पत्तेरशक्यप्रतिपत्तिकत्वात्। उक्तञ्च लाक्षणिकैः

( क्रमशः )

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

नीरस्य यः स्नेहगुणो गरीयान्
        दृष्टः स नेत्रस्य तनोति तृप्तिम् ॥४९॥
नवप्रबालेषु घनारुणश्रीः
        पत्रेषु च श्यामलतापरेषु ।
पीता रुचिः पक्वफलेषु हेतोः
        क्षितेरनेकं गमयन्ति रूपम् ॥५०॥
रूपाण्युपादाननिदानकानां
        रूपानुवर्तीनि भवन्ति कार्ये ।
कपालनीलो घटनीलहेतु-
        र्नानाङ्गरूपाण्यपि चित्रबीजम् ॥५१॥
अलं प्रकाशेन हि जम्बुकानां
        ये व्याघ्रभीता विवरे स्वपन्ति ।
तद्व्यामघोषत्वमपि प्रलीनं
        पूर्वं विधात्रा विहितव्यवस्थम् ॥५२॥
पश्याग्रतः प्राप्तमदीनशृङ्गं
        नीलाह्वयं भूमिधरं विशालम् ।
पयोधिवेलागतपादशैलं
        किरातलीलानिलयं सुरम्यम् ॥५३॥
योऽयं समीपादपि मेघतुल्यो
        नभस्तलस्पर्शिविशालशृङ्गः ।
स्वामुन्नतिं विन्ध्यसमानमानां
        किं पश्यतां चेतसि नाभिधत्ते ॥५४॥
रत्नैर्विचित्रैरुपरुद्धगात्रः
        शैलो महानेष विभाति चित्रः ।
तेभ्यः प्रसृप्तैः किरणैरनेकै-
        र्भित्तिं विना चित्रमपादि शून्ये ॥५५॥

प्रसूनमालाभरणो महीध्रो
मयूरपिच्छेन सुशोभितेन ।
नीलाचलप्रोन्नतराजशृङ्गे
किरीटवन्नेत्रसुखं विधत्ते ॥५६॥

प्रातः प्रभृत्यातपदोषभीतिं
हर्तुं द्रुमा नीलमहीधरस्य ।
लताप्रतानैरपि नीलपत्रैः
कुर्वन्ति गात्रावरणं प्रयत्नात् ॥५७॥

क्वचित् सुरम्यः फलभारनम्रः
कम्रो नवस्निग्धपलाशपुञ्जैः ।
महीधरे चारुफलोपहारैः
कृतज्ञतां स्वां समभिव्यनक्ति ॥५८॥

व्यक्तः क्वचिद् वृक्षगणान्तराले
क्वचिद् विलीनो निविडद्रुमाद्यैः ।
क्वचित् सुखः क्वापि च दुःखहेतु-
र्विधातुरिच्छेव विभाति शैलः ॥५९॥

आदाय पुष्पाभरणानि गात्रे
सुवासितः सौरभसारभारैः ।
विहङ्गसङ्गीतकलप्रचारै-
र्दिगङ्गनामाह्वयतीव शैलः ॥६०॥

प्रातस्तरां वृन्तविसृष्टपुष्पै-
र्दूर्वाप्रतानैः शिशिराभिषिक्तैः ।
विहङ्गमासादितशालिसारैः
सूर्याय मुञ्चत्ययमर्घ्यभारम् ॥६१॥

क्वापि स्रवत्प्रस्रवणैस्तरूणां
मूलान्यसौ सिञ्चति पुष्टिहेतोः ।

पित्रोः शिलानिष्ठुरयोर्मनोऽपि
　　सन्तानके स्नेहरसप्रसिक्तम् ॥६२॥

महीभृतः प्रस्रवणं विशालं
　　निरन्तरं वेगमयं प्रयाति ।
कठोरपाषाणतलं विभिद्य
　　कुतः किलैषा सलिलप्रसूतिः ॥६३॥

जीमूतमाला गिरिसानुलग्ना
　　सम्प्रेरिता लोलसमीरणेन ।
सजीवतामस्य गिरेर्वदन्ती
　　द्रुमानधः सिञ्चति वारिवर्षैः ॥६४॥

अस्मिन् वसन्तः परितः किराता
　　धनुःशरक्षिप्रकराः सुवीराः ।
पञ्चास्य-शार्दूल-कुरङ्ग-घातैः
　　पारुष्यकं स्वं समुदीरयन्ति ॥६५॥

किरातबालाः परितो भ्रमन्तो
　　नीडात् समाहृत्य विहङ्गशावान् ।
कोलाहलं मोदमयं दधानाः
　　कुर्वन्ति शैलं मुखरं दिनेषु ॥६६॥

समीपसञ्चारिविहङ्गयूथे
　　स्थिरप्रचारे च कुरङ्गसङ्घे ।
शरं क्षिपन्तो निपुणं त एते
　　चरन्ति शिक्षां मृगयानुवृत्तेः ॥६७॥

किरातयोषाः खगपिच्छभूषा
　　वृक्षत्वचावृत्य कलेवरार्धम् ।
दारूच्चयं नीरसमाहरन्त्यः
　　स्वचेतसो नीरसतां वदन्ति ॥६८॥

विहङ्गमानां समुपद्रुतानाम्

अस्मिन् किरातैरपि हा पशूनाम् ।

अनेकरूपाः सविषादशब्दा

बाष्पं तरूणामपि वाहयन्ति ॥६९॥

जनैरदृष्टे शिखरे स्थितायां

महासरस्यामिह लब्धजन्मा

सरोजिनी हन्त वृथास्मितैव

विशीर्णपर्णा लयमेति काले ॥७०॥

तस्मिन्नतिक्रान्तसमीरचारे

विहङ्गमानामपि न प्रचारः ।

जीवैरपीतानि मधूनि शोषं

फलानि चाधो विलयं व्रजन्ति ॥७१॥

तीरोपकण्ठे सलिले तरुभ्यः

शीर्णानि पर्णानि मुदा प्लवन्ते ।

यस्मादियं प्रस्रवणप्रसूता

तरङ्गिणी प्राप्तवती सखीवत् ॥७२॥

नूनं न तस्यां विहरन्ति हंसाः

स्थिरानिलायां न पतन्ति भृङ्गाः ।

निःस्पन्दना सा विनिवृत्तशब्दा

स्थिरासना राजति योगिनीव ॥७३॥

शैलो दधात्यक्षयनीरपूरं

निरन्तरप्रस्रवणोऽपि यस्मात् ।

न दीनतामेति जगन्निदानं

यथा प्रधानं निखिलानि सृष्ट्वा ॥७४॥

क्वचिद् गजानां गिरिसन्निभानां

पादप्रचारेण दृढाहिते ।

May, 1942- April, 1943 | १८६४-शकाब्दे पञ्चविंश-वर्षस्य | Vol. XXV, Nos. 1-12

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

भारते मातु भारती



सम्पादकः—

**महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री**

सहकारि-सम्पादकः—

**श्रीउपेन्द्रमोहन-सांख्यतीर्थः**

---

संस्कृत-साहित्य-परिषत्, श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

## १८६४ शकाब्दीय-संस्कृत-साहित्य-परिषन्मुख-पत्रिकास्थ-

# विषय-सूची

[ वर्णक्रमानुसारिणी ]

May, 1943 Reg. No. C. 1073

सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः

संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

भारती मातु भारती

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| May, 1943 | १८६५-शकीये वैशाखे<br>२६श-वर्षस्य १म-संख्या | Vol. XXVI, No. 1 |
|---|---|---|

## कलियुगचरितम्

[ निबन्धकः—श्रीवैष्णवमहापात्रशर्मा ]

नित्याचारं गुरुषु विनयं शुद्धगार्हस्थकृत्यं
त्यक्त्वागारे युवकयुवती भोगशिक्षां भजेते ।
तर्कास्यं तं तरुणविभवं शिक्षिताख्यं समाजं
गन्तुं भीतो भवति सततं वृद्धवेदोक्तधर्मः ॥१॥

मर्मच्छेदे खलु कुशलिनः स्वीयवर्गाः समाजे
गुप्तव्याधिप्रहतवपुषः प्रायशो हा पुमांसः ।
नार्यः क्षिप्रा बहिरुपगमे वावदूकाः कुमार्यः
स्वीयस्थाने व्रजति विलयं जातिधर्मस्य भेदः ॥२॥

ते सीदन्ति व्यथितहृदयाः सत्यधर्माश्रया ये
राजद्वारे भवति नितरामाधिपत्यं खलानाम् ।
निम्नस्थानं सुविमलकला यान्ति विद्याः समग्रा
हा कालेऽस्मिन् कलहकुशले ध्वस्तशीलाः समस्ताः ॥३॥

भार्या मित्रं भवति भवने भूरिदोषाऽपि यूनां
किन्त्वेतेषां सरलपितरौ वैरिणौ हन्त नित्यम् ।
पातिव्रत्ये भवति न मतिः सुन्दरीणां स्ववासे
अन्यासक्ता भ्रमणमनसो हा पुमांसः प्रवासे ॥४॥

मौनं यान्ति क्षितिपतिगणा धर्मरक्षाक्रियायां
धर्मे प्रीतिर्न भवति भयं ब्राह्मणानामधर्मात् ।
शङ्काशून्या परिणयविधौ दुर्भगा विप्रकन्या
संसारेऽस्मात् कलियुगमहाराजराज्याद् बिभेमि ॥५॥

कश्चिद् दिष्ट्या गुणलववशादुच्चतां चेत् प्रयाति
सध्रीचीनं दलितुमितरं लज्जते नो स्वकार्थम् ।
भूत्वा नम्रो विपदि स पुनर्निष्ठुरः सम्पदि स्यात्
प्रायोऽप्यस्मिन्नुपकृतिपरे सोऽपि घोरः कृतघ्नः ॥६॥

स्वल्पज्ञानी भवति सततं भूपतेः प्रीतिपात्रं
पीडामेष प्रथयति सतां स्वाधिकारप्रमत्तः ।
आशामुग्धो भवति सततं दुर्विदग्धः स चायं
सर्वस्याधिं जनयति सदा व्याहतिप्रीत एव ॥७॥

भूमेराधिं जनयति सदा लोकसंख्याबहुत्वं
धूमोऽसारो वियति कुरुते सारशून्यां सदा ताम् ।
अर्थे प्रीतिर्वसति सततं नैव धर्मे न कामे
हा कालेऽस्मिन्नुदरदहने ज्ञानभक्ती निलीने ॥८॥

शैलाः सर्वे दधति न पुनर्नीलिमानं समन्तात्
पद्मं प्रातर्भवति न पुनर्दिव्यसौरभ्यगर्भम् ।

वर्षारम्भे न च वसुमती नीपरोमाञ्चगात्रा
विश्वं पश्य प्रकृतिगतिकं तिष्यतो विश्वबन्धो ॥९॥
कक्षभ्रष्टा ग्रहणगतिः प्राणिनां प्राणरूपा
वृक्षाणां न प्रचुरफलता वारिदोऽकालवर्षी ।
पात्रे दानं प्रभवति न हा ये समुद्रा न तेषां
सत्रे श्रद्धा भवति न तथा वेदमार्गानुगानाम् ॥१०॥
आजिः खाजिरतश्च धावतिमुहुर्वाजी यथोच्छृङ्खलो
नाजीनीतिकथा च विश्वजनताध्वंसाय संजृम्भते ।
आजीव्यप्रहताः स्वजीवनरणे मर्तुं समुत्कण्ठिता
हा जीवाश्रय किं न पश्यसि जगद् राजीवनेत्रः स्वयम् ॥११॥
निश्चिन्तः खलु दुग्धसागरतटे सुप्तोऽसि नित्यं कथं
सर्पाङ्के मृदुलासने सुखमये हे पुण्डरीकेक्षण ! ।
तीव्रासह्यमनोव्यथां तव सुता नित्यं सहन्तेऽधुना
निर्जित्याखिलमानसं करुणया सर्वांस्त्वमङ्गीकुरु ॥१२॥
मामत्र त्यजतु त्वदीयकरुणा मा देवदेव प्रभो
माऽन्यत्र व्यपयातु बुद्धिरिह मे त्वत्पादपद्मस्मृतेः ।
मा मे शान्तिरिह प्रयातु विलयं संसारकोलाहले
विश्वासो मम निर्मलो विलसतु प्रीत्या कथायां तव ॥१३॥
उत्पातोद्वेगदीक्षाऽभिसरति जनतोपद्रवं क्षिप्रगत्या
प्रोत्सन्नो धर्मभावो हरिजनविभवो विप्लवो हन्ति शान्तिम् ।
देहोत्थौ द्रोहमोहौ क्षितितलमिलितौ ध्वान्तवज्जृम्भमाणा-
वस्यां घोरक्षपायां कमलनयन मां रक्ष रक्ष स्वशक्त्या ॥१४॥
जरामरणवारणस्त्वमिह देव संकर्षण
प्रमोहमदवारणः प्रखरशोकविध्वंसनः ।
लुनीहि कृपया भवे लयविहीनलीलार्णवे
सदा बलवतां गतिं प्रतिसुदुर्बलं सम्प्रति ॥१५॥

दम्पत्योरात्मज-जनकयोर्भ्रातृसोदर्ययोश्च
क्षोणीपालप्रकृतिकुलयोर्हन्त दातृग्रहीत्रोः ।
एवं यो वा भवति कलहः स्नेहसौजन्यशून्य-
स्तं त्वं भूमन्नपहर हरे देशशान्त्यै युगेऽस्मिन ॥१६॥

———

# काव्यलक्षणविमर्शः

[ निबन्धकः—वि. कृष्णस्वाम्ययय्यङ्गार्यः ]

"अपारे काव्यसंसारे कविरेकः प्रजापतिरि"त्येतामभियुक्तानामुक्तिं प्रमाणीकुर्वन्तो लाक्षणिका मम्मटभट्टेन बहुमताया नियतिकृतनियमरहितायाः कल्पनाचातुरीसम्पदो व्यवहारज्ञानादिभिर्बाह्यसामग्रीभिरनुप्राणितायाः प्रतिभापदाभिधेयायाः कवित्वकीर्तिसम्पादकता स्वीकृता दृश्यते। कविः क्रान्तदर्शीति प्रवादश्च यद्यपि यौगिकव्युत्पत्तिबलादुपपादयितुमशक्यः, तथापि योगाद्रूढेः शास्त्रप्रवृत्तिनियामिकायाः प्राबल्यमनुरुध्य प्राचीनैरभ्युपगतः। क्रान्तदर्शनसामर्थ्यं परमलौकिकप्रतिभाशालिनां सूक्ष्मदृष्टीनामेव सम्भवतीति न शब्दव्यत्यासमात्रेण तात्पर्यभेदपरिकल्पनं न्याय्यम्। 'तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यती'ति वदता भगवता वाल्मीकिमहर्षिणा सीतालक्ष्मणरामरावणादीनामतिगुप्तान्यप्याचरणानि चतुर्मुखप्रसादादपरोक्षाणि दृष्टिपथमवातरन्निति क्रान्तदर्शने देवतानुग्रहस्य धर्मवीर्यप्रयोज्यस्य हेतुतामुपाचक्षाणेन प्रतिभाया दैविकसम्पद्यन्तर्भूताया नितरामावश्यकत्वमुपपादितम्। सत्त्वगुणोपचयादाध्यात्मिकशक्तिविशेषलाभेनाशेषवृत्तान्तसाक्षात्कारस्य वास्तविकतासम्भावनार्हस्याप्याधुनिकैरविश्वासाद् दैविकसम्पत्तिष्वन्यतमायाः प्रतिभाया बलादेव काव्यनिर्माणमीषत्करमित्यर्थकल्पने दोषाभावात्। न हि दैवांशविरहे भूयसाऽप्यभ्यासादिसामग्रीसहकारेण कवितालेखनं केनापि शक्यं भवति। एवञ्च प्रतिभाविलासमूलकस्य क्रान्तदर्शनस्यैवासाधारणतया कवित्वपदवीप्रवेशहेतुत्वं काव्यमीमांसकानां सर्वेषामप्यभिमतमिति सिद्धम्।

प्रतिभायाश्च सर्वतोमुखत्वे सत्येव कवेरुत्तमकाव्यप्रणयनसामर्थ्यमुपजायत इति नानाविषयावगाहिनीं प्रज्ञामपि ग्रन्थरचनौपयिकसामग्रीषु प्रधाना-मावश्यकीञ्चाहुः। शास्त्राभ्यासमन्तरेण वस्तुतो विद्यमानाया अपि प्रतिभायाः कार्यक्षेत्रं प्रविश्य सरसमधुरानुदारांश्च वाचां निगुम्फाननायासेन निबंद्धु-मिच्छता कविना कुत्राप्युपयोगासम्भवात् तस्याप्यावश्यकत्वमस्तीति मम्मटभट्टः प्राचीकटत्। शास्त्रज्ञानादिकञ्चाध्ययनादिना मनुष्यव्यापारेण लभ्यं स्वतस्सिद्धायाः प्रतिभाशक्तेरुपबृंहणमात्रमिति गुणीभावादेतानि बाह्यसामग्रीष्वेव प्राञ्चः पर्यजीगणन। प्रतिपादनीयस्य विषयस्य समग्र-स्वरूपविज्ञानाय शास्त्राभ्यासादीनामुपयोगात् कल्पनाशक्त्यतिशयेन चारु-रूपेण वर्णनं सुकरं परिणमतीति तेषामाशयः।

काव्यस्वरूपविमर्शाय प्रवृत्ता मम्मटरुद्रटभामहप्रमुखा बहवो लाक्षणिकाः कुत्रापि कविताया भगवद्गुणवर्णनपरतामत्यावश्यकीं नोदाजह्रिरे। काव्य-शोभाया नायकोत्कर्षपरतंत्रतां व्यवस्थापयितुकामेन प्रतापरुद्रीयकारेण श्रुतिवचनानामपि परब्रह्मप्रतिपादकतयैव परिग्राह्यत्वमभिप्रयताऽपि कल्पितेति-वृत्तकानां काव्यानामपकर्षो न साधितः। यद्यस्य भगवत्स्तोत्ररूपाणामेव कृतीनां काव्यसाम्राज्ये सत्कारलाभ इत्याशयः स्यात, तर्हि कस्यापि काकतीयान्वयसम्भवस्य राज्ञः प्रशंसायामासक्तेनानेन रचितमुदाहरणरूपेण प्रदर्शितं रूपकमपि काव्यकोटावनन्तर्भावाद्दूषणीयमापतेत। कालिदासादीनां महाकवीनां कृतिषु भगवद्गुणवर्णनस्य प्राधान्याभावात्तेषामपि कीर्तिलोपः प्रसज्येत। क्रान्तदर्शनमात्रस्य कवित्वकीर्तिप्रतिलम्भकतया परमात्म-गुणानुसन्धानस्य वाचिकस्याऽऽनुषङ्गिकविधयैव वा दुर्निवारमावश्यकत्वं स्वीकुर्वन्तो निराकरणीयाः। काव्यनिर्माणस्य सन्मार्गोपदेशद्वारा श्रेयो-लाभोद्देश्यकत्वेऽपि सद्योदृष्टस्य परनिर्वृतिरूपस्यैव प्रयोजनस्य प्राधान्या-दितरेषां गुणीभावस्याकामेनाप्यभ्युपगमावश्यम्भावात। शुष्कधर्मोपदेशस्य प्रयोजनेषु परिसंख्यातेषु लाक्षणिकैरप्रवेशितस्यापि वैराग्यवासनाप्राबल्या-त्कथञ्चिदङ्गीकृतायामप्यावश्यकतायां स्वरूपनिरूपक-धर्मभूतेषु निर्वृतिसाधन-

त्वादिषु निष्कलङ्केषु जाग्रत्स्वपि परदेवतास्तुतिविरहात्काव्यसम्पदः कथमप्यनपकर्षात। शाकुन्तलनाटकस्य समग्रे मानवलोके विद्वद्भिर्बहुमतस्यापि वैषयिकप्रणयप्रदर्शनपरतया न काव्यकोटौ परिगणनेत्याग्रहपूर्वकस्तस्मिंस्तिरस्कारो हि न तस्य शोभापरिभ्रंशाय, प्रत्युत वक्तुरेव मौर्ख्यप्रदर्शनाय।

(क्रमशः)

---

# अहल्याचरितम्

[ निबन्धकः—श्रीकालीकिङ्कर-काव्यव्याकरणतीर्थः ]

नान्दी

वन्दे रामं कमलनयनं श्यामलं शान्तमूर्तिं
वीरं धीरं गुरुगुणयुतं कोमलं कान्तकान्तिम्।
दान्तं शान्तं दिनमणिकुले दीप्तरूपं स्वभावे
रक्षोघाते धृतखरशरं रौद्ररूपं भजामि ॥१॥

( नान्द्यन्ते ) सूत्रधारः। अलमतिविस्तरेण—

अद्य खलु अस्मिन महोत्सवे विशेषगुणानां समाजसभ्यानां पुरतः "अहल्याचरितं" नाम नाटकं नाटयितव्यं।

( नेपथ्यं दृष्ट्वा ) अयि आर्ये! यदि सम्पन्ना ते वेशसंस्क्रिया, तत आगम्यतां तूर्णम्।

नटी। ( प्रविश्य ) अज्ज इयह्मि तावत अहम। आनवेदु अज्जः।

सूत्रधारः। अयि आर्ये! पश्येमां शारदीं श्रियम्—

तथाहि—विकचकमलकाया स्वच्छतोया मनोज्ञा

विमलधवलकाशा श्वेतपुष्पा जयश्रीः ।

विगतजलदमाला शुभ्रसारं वहन्ती

जयति रजतचन्द्रा शारदी पुण्यलक्ष्मीः ॥२॥

नटी। अज्ज ! कदमं उण उदुं अधिकरिस्सम् ।

सूत्रधारः। इमां शारदश्रियमेव अधिकुरुष्व । शृणु—

कुसुमशिशिरपातं बिन्दुबिन्दुं वहन्तीं

गलितनयनकल्पं पत्रपत्रात् पतन्तम् ।

मधुरकमलभृङ्गे गुञ्जगानं वहन्तीं

नमतु सकलभोगां शारदीं पुण्यलक्ष्मीम् ॥३॥

नटी अज्ज ! इमस्सिं जेव समअए पढमं आणत्तं 'अहल्याचरितं' णाम णाडअं अहिणीअदु ।

सूत्रधारः। ( स्वगतं ) आः सम्यक् स्मृतम् । ( प्रकाशं ) अयि ! शृणु तावत् मुनीनां कोलाहलमयीं करुणवेदनाम् ।

नटी। अज्ज ! सुणामि, सुणामि कधं विअ अज्ज कारणं इति ।

सूत्रधारः। अयि ! कथयामि ते मूलार्थं, शृणु रक्षोभिरुपद्रुतं मुनिकुलं, प्रतिक्षणं व्याहतञ्च स्वधर्मानुष्ठानम् । अधुना यज्ञविघ्नकारिणां मारीचादीनां राक्षसानां सहसा आविर्भावात् एषा आकस्मिकी कोलाहलमयी व्याकुलता ।

नटी। कथं कथं तवोवणेसुं वि अच्चाहितं । अज्ज! कधं कधं गमणीयमिति ।

सूत्रधारः। आर्ये ! साधु पृष्टम् । अयि शृणु तावत्—

विधातुर्वरलाभेन रावणेन पुरा प्रिये ।

त्रिजगद्विजयं कर्तुं चरितं हि महत्तपः ॥४॥

नटी। अज्ज तदो तदो—

सूत्रधारः।—

अधुना वरदीप्तोऽसौ स्वानुगानां पुरःसरः।
जगद्विध्वंसमारेभे मुनीनां भयकारणम् ॥५॥

नटी। अह! अह! नित्थारे कधं उवाओ हुविस्सदि।

सूत्रधारः। अस्त्येव। तथाहि—

सकलभुवनत्राता, भुवनभारहर्ता, भगवान् नारायणो भूभारहरणाय अस्यामेव त्रेतायां रामरूपेणायोध्यायां दशरथगृहेऽवतीर्णः।

नटी। (संस्कृतमास्थाय) तथापि एषा दुर्गतिर्मुनीनाम्।

मुनीनां वेदना चैषा ममापि हृदये महत्।
जातं शल्यमिवाविद्धं गजानां मस्तके यथा ॥६॥

सूत्रधारः। आर्ये! सम्यक् प्रतिबोधितोऽस्मि, अधुना मारीचादिभिस्ताड्यमाना मुनय इतस्ततः पलायन्ते। तथाहि—

ब्रह्मण्यज्ञानसम्पन्ना मुनयो हि यतव्रताः
रक्षसां भयभीतास्ते पलायन्ते द्रुतं वनात् ॥७॥

इति निष्क्रान्तौ

इति प्रस्तावना समाप्ता

———

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road.
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

भूपा इवात्र महिषा महिषीसमेता
मध्याह्नभानुकिरणैरिव दग्धदेहाः ।
आनासिकं किल निमज्ज्य जले स्वदेहं
फूत्कारिणो वियति तोयमभिक्षिपन्ति ॥५॥

वन्या गजाः क्वचन दीर्घकराः सरस्या
आहृत्य वारिनिकरं स्वकरैरुदग्रैः ।
तापापनोदनकृते परिकीर्य काले
कुर्वन्ति सिक्तमुपयुक्तशमं स्वमङ्गम् ॥६॥

नीचैः प्रभृत्यधिशिरस्तरुभिः प्रकीर्णाः
शैला धरां विदधते विधृतातपत्राम् ।
काशप्रसूनमयचामरवीजिताङ्गी
सैषा विभाति महिषीव मनोज्ञरूपा ॥७॥

क्षेत्रेषु हालिकजना नगरोपकण्ठे
सौरातपश्रमजघर्मजलप्रवाहैः ।
सिक्ताः समीपतरुमूलमुपाश्रयन्त-
श्छायाप्रशान्तिमुपयान्ति मिथो लपन्तः ॥८॥

गा बन्धनादपि विमुच्य जलार्द्रपृष्ठान्
कृत्वा नयन्ति तपनातपतापशान्तिम् ।
केचित् पुनः स्ववनिताजनसम्प्रदत्तं
तत्रैव भक्तमुपभुज्य गताः क्षुधान्तम् ॥९॥

पत्युः करं परुषमप्युपलभ्य काले
या पद्मिनी स्मितमुखी दिवसार्धभागे ।
सैव क्षणात् परमधःपतनं तदीयं
सञ्चिन्त्य कम्पितवती पवनेरिताङ्गी ॥१०॥

साध्वी न जातु दयितस्य वियोगदुःखं
सोढुं कथञ्चिदपि पारयते कदाचित् ।

तस्मादधोगतिपथाक्रमणात् पुरस्ता-
दाकण्ठमेव नलिनी सलिले निमग्ना ॥११॥

भृङ्गाः पुनः कमलिनीं किमु मृत्युपङ्कात्
संरक्षितुं दिनकृतोऽस्य दिनान्तरीणाम् ।
सौम्यां विभूतिमभिधाय ससान्त्ववाचं
सञ्चारयन्ति तत एव तथा स्थितैषा ॥१२॥

प्रायेण लोकरहिता पुरपण्यवीथी
द्रव्यक्रयादिविविधेष्टसमाप्तिहेतोः ।
द्वित्राः स्थिता अपि तदा भवनाय गन्तुं
संतन्वते परिकरं सह वस्तुजातैः ॥१३॥

येषां पुनः स्थिरपदो विपणिप्रतानो
द्वारं निरुध्य किल ते भवनाय यान्ति ।
शीघ्रं समाप्य दिनभोजनकृत्यमस्मिन्
भूयोऽपि वाणिजकृते समुपागताः स्युः ॥१४॥

श्रान्ताः प्रतप्तवपुषः सलिलावगाहं
कर्त्तुं सरोवरजले समवातरन्तः ।
आलोड्य तप्तसलिलं तदधस्तुषारै-
र्नीरैः सुशीतलतमैः प्रतियान्ति शान्तिम् ॥१५॥

सौम्या गृहस्थपुरुषा दिनकृत्प्रतापं
निर्बाधमेव परिहर्त्तुमनर्थबीजम् ।
रक्षन्ति चञ्चलशिशूननिशं गृहान्त-
र्नानाविधैः परुषशासनवाक्यबन्धैः ॥१६॥

वह्निं नु वर्षति विदाहकरः समीरो
भूरेणुरुद्गिरति तप्तवपुस्तमेव ।
तस्मान्न सम्प्रति पथि प्रतिगन्तुमर्हाः
पान्थाः श्रयन्ति कति पान्थनिवासवासम् ॥१७॥

केचित् क्षुधार्तपथिकाः पथि खिन्नकायाः

प्राप्याश्रमं गृहपतेः सुकृतैकवृत्तेः ।

तोषं यथा हृदि वहन्त्यशनादिकृत्यैः

पुण्यं तथा विदधतेऽस्य नृयज्ञसाध्यम् ॥१८॥

ये केवलं भुवि निजोदरपोषणार्थं

श्राम्यन्ति मन्दकृतयः स्वजनस्य चार्थे ।

ते हन्त पान्थमिह हीनकटूक्तिजातै-

र्दूरे विसर्ज्य जनयन्ति दुरन्तपापम् ॥१९॥

श्वानश्चिरं परिचितं जनभुक्तशेषं

लब्धुं विलोलरसनाः स्फुरिताग्रपुच्छाः

स्पर्शोद्यताः करतलाद् ग्रहणान्निषिद्धा

दूरे विसृष्टमतिशीघ्रमदन्ति रागात् ॥२०॥

नीराजना-पटह-मर्द्दल-शङ्ख-घण्टा-

वीणा-मृदङ्ग-करतालक-वेणु-भेर्यः

मध्यन्दिने नगरदैवतमन्दिरेभ्यः

श्रोत्रं गताः सुमधुराः परिपावयन्ति ॥२१॥

देवप्रसादशरणा नितरां दरिद्रा

ये तत्र भव्यकरभोजनमाचरन्ति ।

ते श्रेणिशो विततचत्वरमाश्रयन्तो

देवप्रसादमुपभुज्य भजन्ति तृप्तिम् ॥२२॥

वाञ्छन्ति केऽपि बत पूर्वदिनोपवासं

मिथ्या निमित्तमुपकल्प्य निजान्नवृद्धिम् ।

केचित्तथा गृहगतस्थविरार्थमन्ये

गृह्णन्ति भोज्यमिह वस्तु नितान्तदीनाः ॥२३॥

अन्यत्र मण्डपतले परिशुद्धवृत्ताः

सद्ब्राह्मणाः कृतयथोचितनित्यकृत्याः ।

अन्नाहुतिं ज्वलितजाठरपुण्यवह्नौ
निष्पादयन्ति निजगृह्यनयेन गृह्याः ॥२४॥

नो भुञ्जते सुरगणाः स्वमुखेन दत्तं
तृप्तिः परा भवति विप्रवरस्य तृप्त्या ।
तस्मात् सुरार्चनकृतः सुरतृप्तिहेतो-
र्विप्रान् विशेषविदुषः किल भोजयन्ति ॥२५॥

प्राणैः पणैरिह दरिद्रजनस्य सेवा
कार्येति शास्त्रविधिरस्ति ततः स सेव्यः ।
तैलेन किं कथय तैलनिषिक्तशीर्षे
रोगार्दितस्य खलु भेषजमर्थयुक्तम् ॥२७॥

तूलच्छलेन किमु शाल्मलिपादपानां
शीर्षेषु सप्ततुरगाश्वपरिश्रमोत्थः
फेनः समीपगगनोर्ध्वसमाश्रयत्वात्
तस्यावभाति कुसुमच्छलतश्च रक्तम् ॥२७॥

घण्टानिनाद इव यः प्रतियाममेव
ज्ञप्तिं करोति कुररः समयस्य नित्यम् ।
सोऽयं समुच्चतरुशीर्षगतः कठोरं
ध्वानं विधाय दिवसार्धमतिं तनोति ॥२८॥

छाया न सूर्यदयिता सहते सुवर्णां
कृष्णां न तामपि परिष्वजते दिनेशः ।
तस्मादियं चरति सूरदृशोऽन्तराले
तेनैव सम्प्रति पदादध एव सास्ते ॥२९॥

कालेऽस्मिन्नवतीर्य सूर्यकिरणोत्तापप्रशान्तिक्षम-
प्रेष्यालम्बितशिल्पसम्भृतबृहद्व्यासातपत्रः कृती ।
जामात्रा सहितः पुरोपरचितं तीरे पटावासकं
वैश्यः प्राप निरीक्षितः परीजनैः सम्भ्रान्तदृग्वीक्षणैः ॥३०॥

June, 1943 Reg. No. C. 1073



सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः

भारते भातु भारती

संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| June, 1943 | १८६५-शकीये जैष्ठे<br>२६श-वर्षस्य २य-संख्या | Vol. XXVI, No. 2 |
|---|---|---|

## परिभाषाणां निर्माणकालः

[ निबन्धकः—कविभूषणं वि. कृष्णस्वामी अय्यङ्गार्यः ]

पाणिनीये व्याकरणशास्त्रे तावत् काश्चित्परिभाषाः सूत्रकारेणैव वचनरूपेण पठिताः प्रामाणिक्यः प्रसिध्यन्ति । काश्चित्पुनः प्राचीनवैयाकरणतंत्रेषु व्यवहारात् तर्कमीमांसादिशास्त्रान्तरेषूपयुज्यमानैर्लौकिकन्यायैर्गतार्थत्वात् लोकप्रसिद्धिबलेन शास्त्रीयवचनारम्भनिरपेक्षत्वाद्वा सूत्रकारेण वाचनिक्यो नापठ्यन्त । तथापि सूत्रकारस्ताः परिभाषा विना परिनिष्ठितं शास्त्रं प्रवर्तयितुं नैव प्रबभूवेति स्पष्टमेतत्पाणिनीये लब्धप्रवेशानां विद्यार्थिनामपि । 'असिद्धं बहिरङ्गमन्तरङ्गे,' 'परान्नित्यं बलवदि'त्यादिपरिभाषाणामप्रामाणिकत्वे 'वाह ऊठि'त्यादिसूत्रारम्भ एव पाणिनेरयुक्त आपद्येत । एतासां परिभाषाणामभावे तु लौकिकव्यवहारगोचरत्वादनपलपनीयसाधुत्वाकानामपि

शब्दानामशास्त्रीयत्वादपभ्रंशत्वमतिप्रसज्येत । तस्मात्पाणिनिरिमाः परिभाषा मनसि निधायैव शास्त्रं प्रणिनायेति निर्विवादमुपगन्तव्यम् । अर्वाचीनास्तु वचनरूपेणानभिहितानामासां प्रामाण्यनिर्णयो ज्ञापकानुग्रहमपेक्षत इति विचार्य समुचितानि ज्ञापकान्युपन्यास्थन् ।

एषा तावज् ज्ञापकगवेषणपद्धतिः कदा प्रादुर्बभूवेति प्रकृते लेखने विचार्यते । ज्ञापकोपन्यासपूर्वकं परिभाषाणां प्रामाण्यव्यवस्थापनमेव 'परिभाषाणां निर्माण'मित्युपचरितम् । शास्त्रीयप्रक्रियानिर्वाहकत्वादत्यन्तमावश्यिका एताः परिभाषाः केनोपज्ञाता इति चर्चास्पदं विषयमधिकृत्य विमर्शका विवदन्ते । बहुधा विप्रतिपद्यमाना अन्ततो गत्वा परिभाषाणाममूषामपाणिनीयत्वमुपपादयन्ति । तेषामयमाशयः—परिभाषाणामाश्रयणं हि यथाश्रुतायामष्टाध्याय्यां सम्भावितानां दूषणानां परिहाराय । पाणिनिस्तावत् समग्रमपि संस्कृतशब्दजातं करतलामलकमिव यथावद्विविच्य विज्ञाय कुत्राप्यनतिप्रसक्तानि सर्वलक्ष्यसंग्राहकाणि च सूत्राणि प्रणिनायेति श्रद्धाजाड्यमात्रमेतत् । अत एव तदनन्तरकालिकः कात्यायनः पाणिनेर्दोषान् सम्यक् प्रदर्श्य तत्परिहाराय सूत्रन्यासं व्यत्यस्यति स्म । अन्यथा कथमिव तावत्यल्पीयसि व्यवधाने भाषायाः स्वरूपमामूलाग्रं परिवर्तेत ? न चैवं पाणिनिरपि भ्रमप्रमादादिवश्यः पामरसाधारणीमेव कोटिमवगाहेतेति प्रत्यवस्थातव्यम्, इष्टापत्तेः । पाणिनिः कामं महान्पण्डितो मेधावी परिश्रमी च भवतु । एतावता तेन कुत्रापि कदाचिदप्यनुचितं न लिखितमित्याग्रहः कथं युज्यताम् ? एवमष्टाध्याय्यामुपलब्धान् दोषान्परिजिहीर्षुभिः प्रवर्तकस्य पाणिनेः कीर्तिं परां काष्ठामधिरोपयितुमभिलषितवद्भिरर्वाचीनैः कैश्चिद् व्याख्यातृभिः परिभाषा उपन्यस्य तत्र सौत्रप्रमाणनिरूपणेऽवश्यं कर्तव्ये प्राप्ते ज्ञापकानि गवेषितानि । अतः पाणिनिः परिभाषा न जानाति स्मेत्येव युक्तिसङ्गतम् । अन्यथा वाचनिकानि परिभाषान्तराणीव ज्ञापकसिद्धा अपि ताः स स्पष्टप्रतिपत्त्यर्थमपठिष्यत् । नहि कासांचिद्वचनरूपेण पठनमितरासां तु व्यञ्जनामर्यादया निगूहनमित्येवंरीतिकमर्धजरतीयं

पाणिनेरभिमतं संभाव्यते इति। एषा च वादधोरणी लेखस्योपक्रम एव निराकृता। गोल्डस्टुकरादयोऽपि पाश्चात्त्यविमर्शकाः परिभाषाज्ञापकत्वेनोपाहृतानां "ददातिदधात्योर्विभाषे"त्यादि-सूत्राणामितरथा कथंचिदप्युपपत्तिरेव न वक्तुं शक्येति प्रदर्श्य पाणिनिसंमता एव परिभाषा एता न पुनरर्वाचीनैः स्वकपोलकल्पनया प्रचारिता इत्यङ्गीकुर्वन्ति। एवं च परिभाषाणामुपज्ञातारोऽर्वाचीना व्याख्यातार एवेति सिद्धान्तस्समूलो नष्टः। परन्तु ज्ञापकानि कदा गवेषितानि, कैर्गवेषितानीति जिज्ञासा केवलमवशिष्यते।

( क्रमशः )

---

# काव्यलक्षणविमर्शः

( पूर्वानुवृत्तः )

[ निबन्धकः—वि· कृष्णस्वाम्यय्यङ्गार्यः ]

वेदान्तविद्याध्ययनशीलानामपि पारमार्थिकपारलौकिकहितार्थिनां दृष्ट्या कान्तासंमितानि विवेकिभिरादरणीयानि प्रेमादिप्रधानान्यपि कथावर्णनव्याजेन सन्मार्गोपदेशकानि जुगुप्सापरिहारकाणि विवेक-लाभसाधनानि भगवत्कथाविरहितानि शाकुन्तलादीनि काव्यरत्नानि पुरस्करणीयान्येव। प्रथमतस्सुकुमारमतीनां बालकानां काव्यव्यासङ्गेन रामादिवद्वर्तितव्यं न रावणादिवदिति विवेकोत्पत्तावनन्तरमेव शास्त्राध्ययनाधिकारप्राप्त्या वस्तुतत्त्वज्ञानस्य सम्भवात्। आदावेवातिक्लिष्टवेदान्तोपदेशे तु न कश्चिदाध्यात्मिकीं नीरसविद्यां बहुमन्येत। एवं धर्मोपदेशायापि प्रवृत्तेषु काव्येषु रसपरिपोषस्यैव प्राधान्यम्, काव्यस्यात्मा रसो व्यंग्य इति तस्यैव काव्यशोभाभिवर्धकत्वेन लाक्षणिकैरुल्लेखात्। तथा च केषुचित्काव्येषु कल्पितमितिवृत्तमाश्रित्य प्रेमाभिनयस्य प्राधान्येन वर्णनमपि न लेखकानां कवित्वसिद्धौ बाधकम्। भगवद्गुणवर्णनस्य नान्तरीयकतयैव काव्यमध्ये स्थानलाभसम्भावनादिति युक्तिसङ्गता भणितिः।

एवं स्थिते भगवद्रामानुजीयसंप्रदाये प्रधानाचार्येण कवितार्किक-

सिंहादिविरुदभाजा निरवद्यविद्यालाभप्रशस्तव्येन वेदान्तदेशिकपदवीभूषितेन श्रीमद्वेङ्कटनाथनाम्ना कविना स्वकोये यादवाभ्युदयमहाकाव्ये प्रथमसर्गे निबद्धं 'स कविः कथ्यते स्रष्टा रमते यत्र भारती। रसभावगुणीभूतैरलङ्कारैर्गुणोदयै"रिति पद्यमत्रलम्ब्य भगवद्गुणवर्णनहीनानि न काव्यशब्दवाच्यानीति कालिदासादीनामपि कविकुलभूषणानां सत्कारं प्रतिषेधन्तो वेदान्तजडाः परास्ताः। न ह्यस्मिन्पद्ये वश्यवाचो रसपरिपोषणश्रद्धालोरलङ्कारचमत्कारिणीं वर्णनसरणिमङ्गीकुर्वाणस्य कवेर्यशस्सम्पादनमनायाससाध्यमित्यमुं विषयमन्तरेणान्यः कोऽप्यंशो निबन्धकेन विवक्षितः। रसस्य भावानां वा व्यञ्जनावृत्त्या प्रतिपादितानां प्राधान्यमुत्तमकाव्यस्य लक्षणमाचक्षाणा विमर्शका वेदान्तदेशिकस्य सूक्तिमेतां यथार्हमभिनन्दन्ति। परन्तु वेदान्तविद्यागन्धमनाघ्राय न कश्चित्कविर्भवतीति यदस्य पद्यस्य तात्पर्यमर्वाचीनैस्सांप्रदायिकैरुन्नीतं, तत्र प्रमाणानामत्यन्ताभाव एव विश्वासह्रासमुत्पादयति। उत्तरत्र 'वसुधाश्रोत्रजे तस्मिन्व्यासे च हृदयस्थिते। अन्येऽपि कवयः कामं बभूवुरनपत्रपा" इति पद्यन्तु संस्कृतसाहित्ये काव्यशाखामाविर्भाव्य पोषितवतोर्व्यासवाल्मीक्योर्द्वयोरपि सर्वोत्कर्षसाधनायोद्दिष्टं न पुनरर्वाचीनाभिमतरीत्या कालिदासादीनां कवित्वप्रथाखण्डनाय। अन्यथा स्वस्याऽपि कविगोष्ठीमध्यगत्वादात्मनिन्दाया दूषणतापत्तेः। नैच्यानुसन्धानस्यौद्धत्यपरिहाररूपतया गुणत्वेऽपि वस्तुस्थितिकथनस्थले स्वस्मिन्नपकर्षोद्घाटनस्य प्रेक्षावत्प्रवृत्तिविघटकतया दूषणता दुर्वारैवाऽऽपद्येत। तस्माद्वेङ्कटनाथस्यापि मम्मटादिभिस्सविस्तरमुपपादितैव कवित्वप्रक्रिया संमतेति नात्र कुकल्पनानामवकाशलेशोऽपि। एवञ्च "भगवतो रमारमणस्य कल्याणगुणगणवर्णनपराणि पादुकासहस्रादीन्येव काव्यानि न शाकुन्तलादीनि; तेषां निर्माता सन्तताभ्यस्तवेदान्तो वेदान्तदेशिक इति यथार्थनामा वेङ्कटनाथसूरिरेव कविर्न कालिदासादयः" इत्यभिप्रेत्य काव्यलक्षणे नगर्यादिवर्णनवत्परमात्मस्तुतेरपि प्रधानस्थानमावश्यकं वदन्तो न यादवाभ्युदयरचयितुरान्तराभिप्रायज्ञा इत्यावेदनीयमवशिष्यते।

आधुनिकदृष्ट्या तु समाजस्य प्रतिबिम्बग्रहणमेव काव्यसम्पदभिवृद्धौ कारणमिष्यते। धार्मिकसाहित्यञ्च संकुचितभावनानामुत्तेजकं हृदय-वैशाल्यस्य प्रतिबन्धकञ्च नादरणीयमिति सार्वजनिकी प्रतीतिः। धार्मिक-विषयाणामानुषङ्गिकतयैषत्स्पर्शेऽपि जातीय (communal) विद्वेषस्या-भिवृद्धिर्भवतीति भीतिग्रस्ताः कवयः शृङ्गारमेव शरणीकुर्वन्ति। वाचकाना-मभिरुचिरपि नैतिकविषयेषु स्वारस्यसम्भावनाया अप्यशक्यत्वाद्विभावानु-भावादीनि विषयान्तराण्येवावगाहते। धार्मिकक्षेत्रात्साहित्यस्य, साहित्य-क्षेत्राद्धर्मस्य च निर्वासनमेवाऽऽधुनिकनागरकतायाः प्रधानलक्षणं पश्यामः। एवं परिवर्तमाने सार्वजनिकाभिप्राये, धार्मिकोपदेशेषु निरर्थकताभावनया सार्वत्रिकतिरस्कारपात्रेषु संवृत्तेषु, उदरभरणमेव कष्टसाध्यमुपलभमानासु पारलौकिकविषयेभ्यो जुगुप्समानासु नैराश्यदूरीकृतहर्षासु परिहृत-मूढविश्वासासु प्रजासु, भगवद्गुणवर्णनपराणामेव ग्रन्थानां साहित्यसाम्राज्य-प्रवेशाधिकारमुपगस्य तदितराणि काव्यानि दूरतो निराकरणीयानीति भाषमाणाः कलाद्वेषिणः कस्यानुमोदनमासादयिष्यन्ति ? सर्वथा 'स कविः कथ्यते स्रष्टे'ति वदन् वेङ्कटनाथः परं न गर्हणापात्रम्॥

---

# संस्कृत-नाटकानि

[ निबन्धकः—वि. कृष्णस्वाम्ययङ्गार्यः ]

( पूर्वानुवृत्तिः )

नाटकेषु गद्यस्य प्रवेशः कदा बभूवेत्यपि विचारणीयो विषयः। नृत्यं

गद्यम्

हि भावमात्राश्रयं नाटकस्योत्पत्तौ सामग्रीभूतमपि न प्रधानमुपकरणम्। वाक्यार्थाभिनयरूपस्य नाट्यस्यैव नाटकरूपेण परिणामस्य सम्भावनात्। रसाश्रयी हि नाटकजीवातुभूतोऽभिनयो गीतामिश्रितो नाट्य-पदेनाभिधीयते। अत एव रसपरिपोषाय सम्भाषणापद्धतिरप्यावश्यकीति निरूपितं प्राक्। तत्र च सम्भाषणमन्तरा केवलं पद्यानामेव संगीतशास्त्र-

प्रक्रियानुसारेण रसानुगुणवर्णविच्छेदपूर्वकं गानमेव नाटकस्य मूलरूपमासीत। क्रमेण च गद्यशैलीं काव्यप्रपञ्चे लब्धावतारामालक्ष्य मोहितचित्तवृत्तयो रसिका नाटकेष्वपि तस्यास्समावेशमन्वमन्यन्त। तदनन्तरमेव सम्भाषण-पद्धतिरवकाशमवापेति विमर्शकाः प्राहुः। गद्यसंमिश्रणस्य कालः क इति तु नास्माभिर्निर्णेतुं शक्यते। अश्वघोषस्य नाटकभागेष्वपि ( एतस्य नाटकानि संपूर्णरूपाणि नोपलब्धानि ) गद्यस्योपयोगो दृश्यते। एषाऽपि गद्यशैली प्रौढपदगुम्फनाभावेऽपि सरलसरणिमनुकुर्वाणाऽपि परिष्कृतरूपा चिरकालिकप्रयोगानन्तरभाविन्येव। "अस्ति मत्प्रभावपरिगृहीतं पुरुष-संज्ञकं तेजः प्रादुर्भूतम्" "अस्मात्सिद्धान्तप्रतिवेधादुद्धृतदृष्टिशल्ययोः" "आत्मग्राहे सति न नैष्ठिके निर्वृत्तिर्भवति नैरात्म्यादर्शनात्" इत्यादिरूपाणि गद्यवचनान्यश्वघोषनाटकेषूपलभ्यन्ते। एतादृशी गद्यशैली नाटकेषूपयुक्ता प्रथमत एव कथमुपपद्यते ? एतस्मात्कालादपि प्राग् गद्यानामुपयोगात्प्रयोग-रंगमवतीर्णस्य गद्यस्य क्रमेणाभिवृद्धौ हि परिष्कृता सरणिरीदृशी सम्भवति। अतो बहोः कालात्प्राक्—निर्णायकप्रमाणाभावाद् गद्यस्य नाटकेषु प्रवेशः समपद्यतेति तर्कयन्ति विमर्शकाः। संशोधकाः पुनरद्याप्यन्वेषणकार्ये व्यापृता नूतनान्विषयान्विजिज्ञासव एव सन्ति।

संस्कृतनाटकेषु नीचपात्राणामुत्तमपात्राणाञ्च भाषाभेदोऽप्येको विशेषः। **भाषा** नहि भाषान्तरीये साहित्ये कुत्राप्येतद्वैशिष्ट्यं दृष्टिगोचरी-भवति। यद्यपि केवलसंस्कृतमयं दूतवाक्यं नाम भासस्य, केवलप्राकृतमयं कर्पूरमञ्जरी नाम राजशेखरस्य च नाटकमस्य वैलक्षण्यनियमस्यापवाद-(Exeption) रूपं प्रतिभाति, तथापि तादृशान्येकभाषामयाणि रूप-काण्यतीव विरलानि। प्राकृतभाषाणामुपयोगः स्वाभाविकता-(Realism) वादमनुगृह्णाति। तथाहि। ग्राम्या जनता नागरकोचितां प्रौढां व्याकरण-नियमजटिलां संस्कृतभाषां न व्यवहर्तुमलम्।

( क्रमशः )

———

# अहल्याचरितम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—श्रीकालीकिङ्करकाव्यव्याकरणतीर्थः ]

## प्रथमोऽङ्कः

प्रथम-दृश्यम् । ( तपोवनम् )

ततः प्रविशन्ति मारीच-सुवाहुभ्यामनुगम्यमानाः पलायनपरा मुनयः ।

मारीचः । कुत्र कुत्र प्राणभयात् पलायणपराः मुनयः । नास्ति कुत्रापि गत्वा मोक्षस्तेषाम् । तथाहि पश्य—

मुनीनाञ्च विनाशो हि यज्ञध्वंसस्तपोवने ।
अस्माकं हि महत् पुण्यं कर्तव्यं धरणीतले ॥८॥
गोब्राह्मणवधे निन्दा नास्ति कापि कदाचन ।
नराणां भक्षणं कार्यमेष धर्मो विधीयते ॥९॥

मुनयः । शृणु रे राक्षसापसद ! शृणु,

ब्रह्मणो वरदीप्तोऽसि तेनौद्धत्यं क्षमामहे ।
अन्यथा ते विनाशाय समर्था ब्राह्मणा वयम् ॥१०॥
धरणीतलराज्येऽस्मिन् नास्ति दुष्टस्त्वया समः ।
दण्डाय प्रभवन्तोऽपि कालेन ह्यवशा वयम् ॥११॥

सुवाहुः । अः हः अः हः ( इति उच्चैर्हसित्वा ) किं किं, मयि दण्डदाने समर्थाः । एतदपि वक्तुं न लज्जध्वे ?

शृणुत रे तापसाधमाः !

पलायने घृणा नास्ति नास्ति लज्जा हि रोदने ।
नास्ति रक्षा तु युष्माकं राक्षसाधिपशासने ॥१२॥
नास्ति मे करुणा कापि गोब्राह्मणवधे सदा ।
आनन्दो जायते तस्मिन् यज्ञध्वंसे विशेषतः ॥१३॥

मुनयः। एष ते आनन्दः क्षणस्थायी एव।

मारीचः। कथं कथं स एव लङ्काधिपो देवानामपि शासकः किं पुनर्मुनिजनानाम्। शृणुत रे तापसाधमाः—

यद्वीर्यश्रवणाद् भयेन सततं लोकत्रयं कम्पितं
इन्द्रेण प्रभुवासवासभवने दासत्वमङ्गीकृतम्।
दिव्यस्त्रीनयनाम्बुशीकरकणैः संसेव्यमानः सदा
लङ्कानामधिपः स एव भुवने ख्यातः सदा रावणः ॥१४॥

मुनयः। अरे रे राक्षसाधम! शृणु

शासको ह्यविनीतानां धार्मिकाणाञ्च रक्षकः।
पालको हि मुनीनाञ्च धर्मयज्ञस्य पूरकः ॥१५॥
आगमिष्यति ते हन्ता पूर्णब्रह्मसनातनः।
धार्मिकाणां हि रक्षायै भुवो भारजिहीर्षया ॥१६॥

इति निष्क्रान्ताः।

द्वितीयं दृश्यम्।

( तपोवनस्य क्षुद्रवर्त्म )

ततः प्रविशतो गायन्तौ मुनिबालकौ।

वेदना-वेदित-करुणा-याचित-रक्षितोऽहं पालने।
पूर्ण-ब्रह्म-ज्ञान-सन्ध-मनोभृङ्ग-रञ्जने।
स्थावर-जङ्गम-मिलन-बन्धन-स्थित-नव-सव-बन्धने।
नन्दन-नन्दित-चन्दन-गन्धित! नमो नारायण! नमस्ते ॥

(क्रमशः)

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

तस्मिन्नावसथे पटोपरचिते स्रोतस्विनीसैकते

विश्रम्य क्षणमादिशत परिजनानभ्यङ्गकृत्योचितान् ।

ते नानाविधगन्धतैलकलिताः प्रारेभिरेऽभ्यञ्जनं

केचिद् व्यञ्जनसूपभक्तमतुलं पक्तुं ततो व्यापृताः ॥३१॥

तैलाभ्यङ्गविधौ ततः सुसदृशं प्राप्ते समाप्तिं चिरात्

द्रोण्यासादितनिर्मलाम्बुनिवहे सत्यप्यमू वैश्यकौ ।

देहे शान्तिविशेषसाधनकृते नद्यां गतौ सादरं

छत्रोत्सेधनिवर्तितारुणकरौ स्वीयैर्गणैः संवृतौ ॥३२॥

पुरःसरोत्सारितशीतलाम्भसा

प्रतप्तनीरे विहितव्यतिक्रमे ।

अवातरल्लक्षपतिः प्रशान्तये

तरङ्गिते शङ्खपतिश्च तत्क्षणे ॥३३॥

विना विलम्बेन विधाय संस्कृतं

स्वविग्रहं पूततरङ्गिणीजलैः ।

समं मनोनिर्मलतां समाश्रितौ

वणिक्सुतौ स्वीयजनैः समं तदा ॥३४॥

नदीजलं सौरभसारसम्भृतं

तदोपभोक्तुं चपलः समीरणः

समुत्क्षिपन्नाकुलशीकरावलीं

वहन्नसौ वातितरां समन्ततः ॥३५॥

तरङ्गिणीवक्षसि तैलचन्द्रकैः

सुगन्धपूर्णैः प्लवते स्म चित्रिमा ।

विलासिनस्तत्र पयस्वतस्तत-

स्तदाग्रहादम्बुषु कर्षणं ध्रुवम् ॥३६॥

पयोधिसान्निध्यवशात्तरङ्गिणी

तदा भृशं वेगवती विलोकिता ।

जनैस्ततः स्नानकृतिः सुदुष्करा
तरीनिरोधेन तु तत्र न क्रमः ॥३७॥
विलोडनादेव गभीरपाथसां
जगाम नो ग्राहगणस्तदन्तिके ।
नरा यथा बिभ्यति हिंस्रजीवत-
स्तथा नरेभ्योऽपि च हिंस्रदेहिनः ॥३८॥
तरीचतुष्कस्थितिरुत्तरोत्तरं
रुणद्धि नद्या रयमुद्धतं ततः ।
स्थिराम्बु पार्श्वान्तरमाश्रिता जनाः
स्नानं सुखेनैव तदा चिरं व्यधुः ॥३९॥
जिगीषया केऽपि परस्परं जनाः
ससाहसं सन्तरणं प्रचक्रिरे ।
गताः कियद्दूरमथो रयासहाः
पुनः परावृत्य तटं समागताः ॥४०॥
अशिक्षिताः सन्तरणक्रियाक्रमे
जलं कटीदघ्नमिताः कथञ्चन ।
निरुद्धनासाश्रुतिरन्ध्रमाकुलाः
निमज्ज्य तीरं सहसैव संश्रिताः ॥४१॥
समुद्रसामीप्यवशाद् विदूषिता
तरङ्गिणी क्षारजलेन देहिनाम् ।
स्नानोत्थितानां विमले कलेवरे
सितांशुलावण्यमदात् क्षणोत्तरम् ॥४२॥
मुखान्तरे क्षारजलं सुदुःषहं
मा नाम यासीदिति संवृताननाः ।
जिगीषवः सन्तरणे परस्परं
न वाचमप्युत्ससृजुः स्मयोद्धताः ॥४३॥

क्रमेण तीरं समुपागमन्नमी
समाप्य नद्यां सलिलावगाहनम् ।
जलार्द्रवस्त्रास्तु तवारिधारया
निषिच्य भूमिं पटवासमासदन् ।।४४।।

शुद्धिं गतानां पदपूजनं जनाः
कुर्वन्ति नाशुद्धिमुपेयुषां क्वचित् ।
इतीव किं वेदयते वसुन्धरा
स्नानोत्थितानां चरणाङ्कधारणात् ।।४५।।

नानाविधस्वादुकभक्ष्यसिद्धये
ह्यनुत्तमा व्यञ्जनसाधनक्षमाः ।
प्रयत्नवन्तो वितते महानसे
बभूवुरारात् पटकल्पिते तदा ।।४६।।

आर्द्रेन्धनं धूपजनेर्निबन्धनं
न यत्र तत् तत्र न धूमसम्भवः ।
ततो विशुष्केन्धनसम्भवानले
न तत्र धूमस्य लवोऽपि गोचरः ।।४७।।

महानसं धूमहुताशनान्वये
प्रसिद्धदृष्टान्ततया व्यवस्थितम् ।
महानसं तत् परिपश्यतां विदां
प्रसिद्धिरेषा व्यगमन्मनोऽन्तरात् ।।४८।।

विशुद्धकौषेयमये सुवाससी
ततो वसित्वा वणिजौ नयान्वितौ ।
विधाय नित्यं निजसान्ध्यवन्दनं
प्रचक्रतुः शाम्भवलिङ्गपूजनम् ।।४९।।

विलेपितं चारु ललाटपट्टकं
विभूतिभिर्बाहुयुगञ्च शोभनम् ।

धृता च रुद्राक्षमयाक्षमालिका
करप्रकोष्ठे श्रवणे तथा गले ॥५०॥
प्रभूतमालूरपलाशपुष्पकै-
र्दूर्वाक्षताद्यैरपि गन्धबन्धुरैः ।
सधूपदीपाचमनीयपाद्यकै-
र्मनोज्ञनैवेद्यमयैः शिवोऽर्चितः ॥५१॥
समर्चनीयेन भिदां परित्यजन्
प्रपूजयेद्देवमिति व्यवस्थितिः ।
न हापिता सा शिवतुल्यशोभया
तदा तयोरित्थममानि मानवैः ॥५२॥
विधाय वैधं विधिमात्मना ततो
वणिग्वरौ नित्यमनर्थशान्तये ।
दिनार्धकृत्यां जठरानलाहुतिं
प्रचक्रतुः शक्रसमानसम्पदौ ॥५३॥
अनेकसूपं सरसं सुभोजनं
पवित्रपात्रं निपुणप्रकल्पितम् ।
समोदकक्षीरदधिप्रसाधितं
घृतौदनाढ्यं रसनामतर्पयत् ॥५४॥
रसाः षडेवात्र यथाक्रमं तयोः
समाहरन्नुत्तमतृप्तिमञ्जसा ।
समर्चितानां सविशेषसम्पदां
गृहे वने वा समभोगभागिता ॥५५॥
सुनीलशाकं नवकांस्यमुज्ज्वलं
समन्ततः पात्रशतैरलङ्कृतम् ।
विचित्रनक्षत्रशतोपशोभितो
बभौ शशीवोज्ज्वलपूर्णमण्डलः ॥५६॥

July, 1943 Reg. No. C. 1073



सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः

संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

भारते मातु भारती

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| July, 1943 | १८६५-शकीये आषाढे<br>२६श-वर्षस्य ३य-संख्या | Vol. XXVI, No. 3 |
|---|---|---|

## परिभाषाणां निर्माणकालः

( पूर्वानुवृत्तः )

[ निबन्धकः—कविभूषणं वि. कृष्णस्वामी अय्यङ्गार्यः ]

तत्र केचिद्विमर्शकाः परिभाषाणां कालं क्रिस्तशकस्य सप्तमं शतकमामनन्ति । तेषामसौ सिद्धान्तः—'व्याकरणशाखान्तराणामाविर्भावादर्वाक् पाणिनीयायामष्टाध्याय्यां संभावितानि शाखान्तरावलम्बिभिः पण्डितै रुद्भावितानि च दूषणानि परिहरणीयान्यापन्नन् । पाणिनीयव्याकरणस्य परिनिष्ठानं (perfection) दुष्प्रतिवचमिति महता प्रयासेन समर्थनीयमापेदे । अर्वाचीनशाखान्तरेषु नूतनतया संयोजितैर्वचनैः साधनीयानि रूपाणि पाणिनीयैस्सूत्रैरेव यथाकथंचित्सिध्यन्तीति सयुक्तिकमुपपादनीयमासीत् । अन्यथा विद्यार्थिनः पाणिनीयव्याकरणं नाध्यगीष्यन्त, न वा पण्डिता अष्टाध्यायीं सबहुमानमाश्रयिष्यन्त । अस्यामवस्थायां संभावित-

सकलदोषनिराकरणायार्वाचीनैरभिनिवेशपरवशान्तरङ्गैः परमतप्रत्याख्यान-पराणि योगविभागादिभिरुपायैरनिष्टनिवारणप्रदर्शकानि च व्याख्यानानि व्यलिख्यन्त। तत्र च प्रामाण्यप्रतिपत्त्यै ज्ञापकानुग्रहमुपदर्श्य नैषाऽस्माकं स्वतंत्रकल्पना किन्तु पाणिनेरप्यभिमतेति जगदुः। एषा च पद्धतिः क्रिस्तशकस्य पञ्चमशतके चन्द्रगोमिनो नाम चान्द्रव्याकरणाचार्यस्य ग्रन्थनिर्माणादनन्तरमुपक्रान्ता। चान्द्रव्याकरणे नवीनरूपसाधनार्थमवलम्बितानि पञ्चत्रिंशद्वचनानि काशिकाकाराभ्यां स्वकीये वृत्तिग्रन्थे व्याख्याय पाणिनीयत्वेनोपन्यस्तानि। एतच्च निन्दास्पदं ग्रन्थचौर्यमयुक्तमभिप्रयन् कैयटस्तत्र तत्र 'अपाणिनीयस्सूत्रेषु पाठ' इति वदंस्तानि प्रत्याचख्यौ। काशिकाकारयोः काले पाणिनीयस्यैतावती प्रतिष्ठा नासीद्यदपाणिनीयानां शब्दानां साधुत्वमभ्यनुज्ञायेत। अतस्ताभ्यां प्रचलितव्यवहारकोटिप्रविष्टानां साधुत्वेन चन्द्रादिभिरुपगतानां शब्दानामन्वाख्यानं पाणिनिनाऽपि कृतमिति प्रतिपादयितुं ग्रन्थचौर्यमप्यदोष इत्यास्थितम्। कैयटकाले तु तेषामपाणिनीयत्वेनोपगमे न किञ्चिद्बाधकमदृश्यत। विश्रामादीनि पदानि झटित्यर्थप्रत्ययनसमर्थानि महाकविभिर्निरङ्कुशतयोपयुक्तानि यद्यपि न पाणिनीयानि तथापि तेषां साधुत्वं परं निर्विवादमूरीक्रियते स्म। साधूनामेषामनन्वाख्यानमात्रेण पाणिनेरपकर्षो न केनाप्यचोद्यत। अत एव निष्कपटवृत्तिः कैयटः, 'अपाणिनीयस्सूत्रेषु पाठः' इति काशिकाकाराभ्यां प्रक्षिप्तान् भागान् दूरीचकार। एतेन समुदितेन सन्दर्भेण काशिकानिर्माणसमये शाखान्तरस्थानां प्रतिकादीनां निराकरणाय परिभाषादिकं नूतनमुपायजातमाश्रितमिति सिध्यति। अत एव परिभाषाणां निर्माणकालः क्रि॰ श॰ सप्तमशतकमिति निर्णीयते। काशिकाग्रन्थो हि तस्मिन्काले निर्मित इति प्रामाणान्तरैरवसितोऽयमर्थः' इति। एतत्सर्वं केवलमभित्तिचित्रायितं कल्पनामात्रविलसितमिति भाष्याध्यायिनामपरोक्षम्।

महाभाष्यकारो भगवान् पतञ्जलिः क्रिस्तात्पूर्वं द्वितीयशतकस्य मध्यभागे (150 B.C.) भुवमवततारेति विमर्शकानामैकमत्येन निर्णयः। यदि

परिभाषाणामुपज्ञानं क्रिस्तशकस्य सप्तमे शतके, कथन्तर्हि भाष्यग्रन्थे तासां व्याख्यानं संगच्छेत ? 'एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषे'त्यादि-शब्दैर्ज्ञापकोपन्यासपूर्वकं परिभाषाणां प्रामाणिकत्वमुदाहृत्य कान्यस्याः प्रयोजनानीत्यादिना तासामनन्यथासिद्धानि फलान्यपि भगवान्भाष्यकार एव प्रदर्शयति। अंत्यबाधेऽंत्यसदेशस्येत्यादिवार्त्तिकान्यपि परिभाषा-रूपाणि पठतां तासां निर्माणकालः क्रि. श, सप्तमं शतकमिति वादो निर्मूल एवेति निस्संशयं प्रतिभाति। भाष्यकारेणानुक्तानां परिभाषाणां प्रामाण्य-मेव निर्बीजमिति वदन् नागेशः 'आगमशास्त्रमनित्यं', 'गणकार्यमनित्य'-मित्यादिप्राचीनसंमतपरिभाषाः काश्चन निर्दाक्षिण्यं प्रत्याचष्टे। अन्यथा भाष्यप्रामाण्यस्य विनिगमकत्वेनानाश्रयणे ज्ञापकत्वेनाभिमतानि सूत्राणि निरर्थकानीति प्रत्याख्यायेरन्, प्रत्याख्यातानि च कानिचिदर्थविशेषज्ञापका-नीत्यनिष्टरूपापादनायोपयुज्येरन्निति दोषमभिदधाति। लक्ष्यदर्शनविहीनाना-मस्मादृशानां लक्ष्यचक्षुष्कस्य भगवतो भाष्यकारस्य वचने प्रामाण्य-विस्रम्भमन्तरा न गत्यन्तरमस्तीति समर्थयते। योगविभागादीन्यपि भाष्यानुक्तानि न प्रमाणानीति प्रतिपादयन् 'व्याख्यानमेव शरण' मिति वैयाकरणानां प्रवादं सार्थकयति। एवं स्थिते परिभाषानिर्माणकालः क्रि. पू. द्वितीयशतकमित्येव सर्वैरङ्गीकर्तव्यमापतति। तस्मात् क्रि. श. सप्तम-शतके परिभाषाणामुपज्ञानमिति वादो न कथंचिदुपपद्यते। यदि विमर्शका निष्पक्षपातास्सत्यगवेषणामात्रे बद्धश्रद्धाः प्रतिवादिनामपि भणितिषु सावधानं श्रवणं प्रदद्युस्तर्हि तेऽपि परिभाषाणां निर्मातारः प्राचीना एव क्रिस्तादिति सत्यं नापलपितुमभिलषेयुः।

———

# अहल्याचरितम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—श्रीकालीकिङ्करकाव्यव्याकरणतीर्थः ]

कृपालुः। भ्रातः! उद्दालक! पश्य पश्य, रक्षोभिरुपद्रुतं शून्यप्रायं तपोवनम्—

तथाहि—शून्यं शून्यं मुनिजनगृहं नीरवं भीतिभारै
रिक्तं सर्वं निखिलगहनं राक्षसानां भयेन।
क्लान्तं श्रान्तं मदमृगकुलं वेदिमध्ये न दृष्टं
त्यक्तं सर्वं कलखगकुलं सर्ववृक्षे स्थितं यत्॥१७॥

अपि च—

पीयन्ते न जलाशयेषु महिषैः क्लान्तैर्वने सर्वतो
गीयन्ते न तरौ विहङ्गमवरैः कुञ्जे कुलायेषु तैः।
श्रूयन्ते न विधानमङ्गलभवाः शब्दाः सदा सामगाः
क्लान्तं सर्ववनं तपोधनधनं शून्यं सदा सर्वतः॥१८॥

अपिच—

पिबति न खलु तोयं भीतिपूर्णो मृगो हि
जनयति गुरुतापं तापसे यज्ञहीने।
प्रवहति खलु वातो घोरनादैः समन्ताद्
भवति भवति सर्वं शान्तिहीनं वनं नः॥१९॥

उद्दालकः। भो भ्रातः कृपालो! अस्ति काचित् नव-वार्ता तपोवनस्य।

कृपालुः। भ्रातः, अस्ति, अस्ति, शृणु—अस्ति अधुना तावत् महामुनिर्विश्वामित्रो नवीनयज्ञे संवृतः। तत्र हि तत्रभवतां यज्ञसविधे सकलमुनिजनानां पुनः समावेशो भवति। अत्र च महत् कौतूहलं मे तद्दर्शनाय, पश्यापि च यज्ञसमाप्तेः कारणम्।

उद्दालकः। हन्त ! अस्मिन् खलु काले कथं महामुनिना आरब्धो यज्ञः।

कृपालुः। अस्ति-तावत् महत् कारणम्। श्रूयताम्—

मुनीनां यज्ञरक्षार्थं मन्त्राणां कुशलेन हि।
परीक्षा भवति त्वद्य रक्षोमुनिबलक्रमे ॥२०॥

उभौ। तत् आवां यज्ञदर्शनसुखमनुभूय आत्मप्रसादम् अनुभवावः।

इति प्रस्थितौ।

---

## तृतीयदृश्यम्।

( विश्वामित्रस्य आश्रमः )

तत्र यज्ञशालायां यज्ञरतैर्मुनिभिः सह उपविष्टो विश्वामित्रः।

विश्वामित्रः। भोः भोः मुनयः ! तत्रभवन्तो विदांकुर्वन्तु, अतीव-सङ्गोपनीयमन्त्रैः यज्ञं समापयन्तु। यथा राक्षसादयो न विघ्नकर्त्तारो भवन्तु इति।

सर्वे मुनयः।

ॐ भूताः प्रेताः पिशाचाश्च राक्षसाश्च सरीसृपाः।
ते गृह्णन्तु मया दत्तं वलिमेतं प्रसाधितम् ॥
पूजिता गन्धपुष्पाद्यैर्वलिभिस्तर्पितास्तथा।
देशादस्माद् विनिःसृत्य पूजां पश्यन्तु मत्कृताम् ॥

ॐ अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्।

( इति अग्नये आहुतिं ददति )। (अदूरे महान् कलकलः)।

अन्तरीक्षे सानुचरः सुवाहुः। अहो हो—कथं कथम् अद्यापि च मुनयो यज्ञं समापयितुं चेष्टन्ते। हन्त तावत् पश्यत मे विक्रमम्।

(समीपमागत्य)—

अस्मासु वर्तमानेषु कुत्र यज्ञसमापनम्।
यज्ञकार्यसमाधाने युष्मच्चेष्टा वृथैव हि ॥२१॥

पश्यन्तु मद्विक्रमम्—

नाशनं मुनीनामद्य कर्तव्यं रावणप्रियम् ।
यज्ञविघ्नं यथाशक्ति करोमि विधिवद् ध्रुवम् ॥२२॥
नास्ति शक्तिः कथञ्चापि यज्ञरक्षा कदापि न ।
यज्ञध्वंसो हि मे कार्यः पश्य त्वं पुरतः स्थितः ॥२३॥

( इति तथा कृत्वा प्रस्थिताः ) ।

सर्वे मुनयः । अहह ! नष्टो नो यज्ञः कथं कथं अस्मत्-परित्राणं भवति । अथवा महामुनिरेव अस्माकं शरणम् । ( क्रमशः )

---

# संस्कृत-नाटकानि

( पूर्वानुवृत्तः )

[ निबन्धकः—वि. कृष्णस्वाम्यय्यङ्गार्यः ]

अत एवाधुनाऽपि व्यवहारभाषासु ग्राम्यप्रयोगाणामनेकेषामुपलम्भात् प्रान्तभेदेन भाषारूपमपि विभिन्नमेव दृश्यते । उच्चारणादावपि महान्भेदः प्रान्तभेदेन सम्भवतीति स्पष्टमेवैतत् । एतस्यामवस्थायां नगरसम्पर्कशून्या ग्रामीणास्सुसंस्कृतानां वाणीमुपयोक्तुमसमर्था एव भवन्ति । तमेनं भाषारूपभेदमनुसंधाय प्राकृतसंस्कृतभेदेन भाषाद्वयमपि स्वाभाविकताया अभंगाय कवयः प्रयुञ्जते । ग्रामीणानां वदनान्निस्सरन्ती तत्त्वोपदेशवाक् न हि स्वाभाविकतां परिपुष्णाति ।' इति पाश्चात्त्यानामुत्प्रेक्षा । वस्तुतो हि संस्कृतापेक्षया प्राकृतभाषाऽतीवदुर्बोधा नियमाडम्बरदुरवगाहा च । संस्कृतपदानां व्युत्पत्तिमर्थं प्रयोगञ्च यथावद्विजानानेनैव पुंसा प्राकृतव्याकरणनियमाननुसृत्य वर्णव्यत्यासपूर्वकं तया व्यवहारः कर्तव्य इति कथमत्र सौलभ्यम् ? संस्कृतज्ञानमन्तरेण च न प्राकृतभाषाज्ञानं कदाऽपि सम्भवति । यदि ग्राम्याणां संस्कृतभाषाज्ञानमेव नाभविष्यत्तर्हि कथं नाम मध्यमोत्तमपात्रयोरन्योन्यसम्भाषणसम्भवः ? मध्यमपात्रस्योत्तमपात्रवचनतात्पर्यानवगमात्प्रत्युत्तरदानेऽसामर्थ्य-

प्रसङ्गात्। यदि चाधमपात्राणामपि परोदितवाक्यार्थज्ञाने सामर्थ्यमस्त्येव, संस्कृतभाषापरिचयस्य प्राचीनयुगे सर्वसाधारणतादर्शनात इत्यभिधीयते तर्हि तेषामपि तयैव भाषया व्यवहारे किं बाधकम्? ग्रामीणोचिततया च केषांचिद् व्याकरणनियमानामतिलंघनमपभ्रंशानाञ्च तत्र तत्र प्रयोगः, मध्ये मध्ये केषांचिदक्षराणामस्फुटोच्चारणमित्यादिका दोषास्तत्र प्रयत्नपूर्वकं निबध्यन्ताम्, नहि दुष्टायामनियतसंस्कारायामपि भाषायामीदृश एव व्यवहारः कर्तव्य इति नियामकं व्याकरणमर्थवद्भवति। आंग्लभाषामजानानेन पुरुषेणैवमेवं व्यवहर्तव्यमित्यपशब्दव्युत्पादकं व्याकरणमपि तर्ह्यावश्यकमापद्येत। अत एव प्राकृतभाषाणामपभ्रंशरूपत्वमप्यनुपपन्नमेवेत्यस्माकमाशयः। अत एव षड्भाषाचन्द्रिकाख्यं व्याकरणशास्त्रमपि सार्थकम्। अन्यथा स्त्रीशब्दस्य स्थाने "इत्थिआ" इत्येव प्रयोक्तव्यम्। न तु 'त्रिआ', 'त्तुआ', 'त्रेउ' 'कातु' इत्यादिशब्दा इति नियमानुपपत्तेः। प्राकृतभाषाणां स्वतंत्रभाषान्तरत्वास्वीकारेऽपभ्रंशान्तराणाममीषामप्यशुद्धत्वाविशेषात्प्रयोगसम्भवादिति। यत्तु निदर्शयन्ति—'प्रान्तभेदाद्भाषाभेदवदत्र ग्राम्याणां भाषाभेद' इति, तदप्यापाततः। प्रान्तभेदेन भाषाभेदेऽपि तत्र नामान्तरव्यवहारस्यादर्शनात। संस्कृतभाषायान्तु प्राकृता मागधी शौरसेनीत्यादीनां नामान्तराणामेवोपलम्भात। शूरसेनाख्यवर्गीयाणां शौरसेनी, मगधराज्ये मागधीति प्रान्तभेदस्य निरूपणसम्भवेऽपि तासामेकजातीयताया दुरुपपादत्वात्। कथमन्यथा मागध्यादिषु प्राकृतभाषासु संस्कृतत्वव्यवहारो न सम्भवति? पाणिनीयव्याकरणे 'प्राचां ष्फ तद्धितः' 'उदीच्यामातः स्थाने यकपूर्वायाः' 'प्राचां ग्रामनगराणाम्' 'उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्' 'प्राचामवृद्धात्फिन्बहुलम्' 'उदीचामिञ्' 'प्राचां कटादे' रित्यादिसूत्राणि देशभेदेन भाषारूपभेदमुपपादयन्ति। एवावता सूत्रैरेतैर्निष्पन्नानां शब्दानामपभ्रंशत्वं भाषान्तरीयत्वं वा न कश्चिद्धीमाननुजानीते। (क्रमशः)

———

## महामहोपाध्याय-हाराणचन्द्रशास्त्रिणां परलोकप्रयाणम्

व्यतीते सौराषाढस्य १२श-दिवसे कलिकाता-गभर्णमेण्टसंस्कृतमहाविद्यालयस्य पाणिनीयव्याकरणाध्यापकाः पण्डितप्रकाण्डा महामहोपाध्याय-हाराणचन्द्रशास्त्रिमहोदया अनवसित इवायुषि दुर्विपाकपूर्तेरिव परिजनानां दौर्भाग्यादिवास्माकं दौर्जन्यादिव कालस्य भाग्यक्षयादिव संस्कृतमहाविद्यालयस्य सौभाग्यभङ्गादिव वङ्गानाम् अकस्मात् परलोकं प्रस्थिताः। प्रायेणैतन्महात्मोपज्ञमेव वाणी पाणिनीयमधिकृत्याश्रूयत वङ्गीयैरिति नातिरिक्तं वचः। पाणिनीये विशेषविदामपि तेषां वेदान्तादिष्वपि दर्शनेष्वकुण्ठितैवावर्तत प्रतिभेति तत्परिचितानामनुभवः। एतत्परिजनानां शोकशान्तिं कामयमाना वयम् एतानधिकृत्य कञ्चन विशेषं सञ्चिकान्तरे प्रपञ्चयितुमाशास्महे।

## स्वर्गतो भूपतिरायचतुर्धुरीणः

परिषदः परमबान्धवः प्रसिद्ध-'टाकी'स्थभूस्वामिवंशीयो भूपतिरायचतुर्धुरीणमहोदयोऽपि व्यतीते सौराषाढे मासि परलोकं प्रस्थितः। सोऽयं परिषत्प्रतिष्ठापयितुर्गीष्पति-रायचतुर्धुरीणमहोदयस्य ज्यायान् स्वयमपि परिषदः कल्पाणाभिनिवेशी प्रवया अपि परलोकं गच्छन्नुपचिनोत्येव नः शोकसन्तानम्। वयमेतत्परिजनानां दुःखेन दुःखमनुभवामः।

### परिषदो विशेषाधिवेशनम्

एतयोर्द्वयोर्महात्मनोः परलोकप्राप्तिमुपलक्ष्य व्यतीते सौराषाढस्य १७श-दिवसे महामहोपाध्याय-श्रीयुक्त-योगेन्द्रनाथ-तर्कवेदान्ततीर्थमहोदयानां साभापत्येन परिषद एकं विशेषाधिवेशनं जातम्। तत्रोपस्थिता बहवः पण्डिताः स्वर्गतयोरनयोर्महाभागयोर्गुणानधिकृत्य भाषणं प्रदत्तवन्त इति।

---

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता। 

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

समन्ततस्तत्र कृतिप्रिया नरा
        वणिग्वरौ भोजयितुं श्रितादराः ।
इदं न चेदन्यदथेच्छ वाऽपरम्
        प्रकाममेवं विनयात् प्रतुष्टुवुः ॥५७॥

नानाविधं स्वादुकवस्तु सस्पृहं
        भुक्त्वा परां तृप्तिमुपागतौ ततः ।
निपीय मन्त्रेण विशौ पयोलवान्
        आचम्य विश्रान्तिमथाचिकीर्षताम् ॥५८॥

दुष्यान्तरास्थानवहिःप्रकोष्ठके
        तदा श्रितो लक्षपतिः सुखासनम् ।
ससम्भ्रमं स्वीयजनैः सुसेवितः
        सुरस्यताम्बूलरसे रतिं दधे ॥५९॥

निपीतताम्बूलरसः ससौरभाम्
        आस्वाद्य सद्यः शुभधूमवर्तिकाम् ।
प्रेष्यानुसञ्चारितचामरानिलः
        प्राप्तुं सुषुप्तिं चकमे प्रशान्तये ॥६०॥

नवो युवा शङ्खपतिस्तु सोद्यमः
        क्षणं सुविश्रम्य पटालयान्तरे ।
पुराणसम्बन्धिकथानुशीलने
        निवेशयामास मनो विनोदने ॥६१॥

परे च दूरे पटमण्डपान्तरे
        यथेच्छमाचम्य समाप्य भोजनम् ।
नानाविधं कौतुकमाश्रितास्तदा
        नदीतटं पत्तनतामुपानयन् ॥६२॥

कोलाहलैः कोलमनोहलाहलै-
        रपूरि तत् पर्वतकाननान्तरम् ।

समीरणो वक्षसि सम्भृतध्वनिः
प्रमोदसन्देशनिवेदकोऽभवत् ॥६३॥
क्रीडा क्वचिन्मोदमयी प्रवर्तिता
क्वचित् सुरम्यस्वरगीतिरुद्गता ।
मृदङ्गवीणादिरवः क्वचित्तथा
मिथो विवादाः क्वचन प्रपेदिरे ॥६४॥
कियत्क्षणानेवमुदित्वरोद्यमाः
प्रहर्षविश्रान्तिसुखं समाश्रिताः ।
पुनः प्रयाणाय गतक्लमाः क्रमा-
दशेषभाण्डानि तरीमुपानयन् ॥६५॥
उदीच्यकृत्यानि समाप्य सादरं
जनेष्वपेक्षां विदधत्सु विट्पतेः ।
श्रीविष्णुरागादवधूतवेशधृग्
वणिक्पतिं वञ्चयितुं स्वमायया ॥६६॥
शिरो जटाभारभृतं वनीकृतं
सुजीर्णकन्थापरिमन्थरं वपुः ।
विभूतिभूमाकलितं ललाटकं
स्थितोऽपसव्येऽनपमृष्टचीवरः ॥६७॥
वहन्ति लालाः क्षतसृक्कभागयो-
र्मलीमसं धूलिकुलैः कलेवरम् ।
समावृतं सोत्सवमक्षिकाशतै-
र्विरूपताया विहगैरुपद्रुतम् ॥६८॥
जटाग्रभागा विलुठन्ति भूतले
नमेध्यपर्णादिपरागकर्षिणः ।
समाश्रितोन्माददशः स वायसैः
समीरणेनापि समं समालपत् ॥६९॥

यदृच्छयोवाच जहास च क्षणं
रुरोद चाश्रूणि विमुच्य दुःखितः ।
दधाव तस्थौ नयने न्यमीलयत
क्रुधेव दीप्तः सहसोदमीलयत ॥७०॥

रत्नानि बुद्ध्वेव तटस्थसैकतैः
समाहृतैः पूरितवान् स्वचीवरम् ।
क्षणात्परं सैकततत्त्वदर्शनात्
स्वचीवराद् दूरपदे व्यसर्जयत् ॥७१॥

चञ्च्वा दशन्तं विनिपत्य मस्तके
प्रतर्जयामास कदापि वायसम् ।
कदापि सार्धं चलिताश्च मक्षिकाः
करेण सञ्चित्य वियत्युपाक्षिपत् ॥७२॥

उपाजगामाथ नदीतटाध्वना
क्रमेण नानाविकटध्वनिं दधत् ।
पटुः स्वरूपावरणे जगन्मयः
कियन्न रूपं समधत्त पूर्वतः ।।७३।।

अदृष्टपूर्वं मतिविप्लवाकुलं
कूलङ्कषायाः सरितः समं चलम् ।
समीक्ष्य ते लक्षपतेर्जना भृशं
विचित्रकौतूहलमापुरन्तरे ।।७४।।

कुतः किलास्मिन् विजने सरित्तटे
समुद्धतोन्मादृदशोऽयमागतः ?
इति प्रतर्काकुलिता विवेकिनो
न निश्चयं चेतसि कश्चिदाश्रयन् ॥७५॥

विलोलचित्ताः कुतुकप्रिया जनाः
प्रलप्य नानाविधचित्रभाषितम् ।

दधुर्मिथो हास्यरसानुकूलतां
तदीयभावाद्यनुवृत्तिमाश्रिताः ॥७६॥
परे च कौमारदशासमुद्धुराः
प्रकीर्णकोलाहलपूरिताम्बराः ।
धरारजोजीर्णपलाशसञ्चयै-
रवाकिरन्नेनमधीतसाहसाः ॥७७॥
उपद्रुतात्मा परितः सयष्टिकः
प्रतर्जयन्नेष रुषेव दीपितः ।
कदापि दुद्राव निकारकारिणः
शरीरिणो द्रावयितुं सुदूरतः ॥७८॥
न कोऽपि कोपं तमवैद् विहित्रिमं
न चापि मायाविहितां तदाकृतिम् ।
परेशमायागुणमुग्धमानसः
प्रपञ्चमिथ्यात्वमिवात्र संसृतौ ॥७९॥
क्रमेण कोलाहलिभिः समावृतः
क्रियाशतैर्याविदुपद्रुतो जनैः ।
स सम्प्रपन्नः समया पटालयं
तदैव सुप्तिं विजहौ वणिग्वरः ॥८०॥
समादिशच्छङ्खपतिं स विस्मित
स्त्वरान्वितः सुप्तिसमुत्थितो वणिक् ।
कथं नु कोलाहल एष वर्धते
विबुध्यतां वृत्तमिदं किमीदृशम् ? ॥८१॥
दिशन्तमेवं तनयापतिं तदा
तृतीयवर्णाधिपतिं मनस्विनम् ।
द्रुतं समागम्य जनः सकौतुको
जगाद वृत्तं विवृतं तदाऽदितः ॥८२॥

September, 1943 Reg. No. C. 1073



सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः

संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

September, 1943 — १८६५-शकीये भाद्रे, २६श-वर्षस्य ५म-संख्या — Vol. XXVI, No. 5

## उपनिषदामद्वैतपरता

( पूर्वानुवृत्ता )

एतेन—"अथेदं भस्मान्तं शरीरमि"ति वाक्यमपि—व्याख्यातम् । इदं हि वाक्यं प्राणादीनामधिदैवतात्मनि लयेऽपि स्थूलशरीरस्य विद्यमानत्वात् कथं विदेहकैवल्यसिद्धिरिति शङ्कावारणार्थमित्यद्वैतमतम् । तेन च स्थूलशरीरमिव सूक्ष्मशरीरादिकमपि मुच्यमानानां नोद्गच्छति, इति दृष्टान्तविधया स्थूलशरीरविनाशाभिप्रायमिदं वाक्यमिति फलति । तेन च—स्थूलशरीरविनाशोऽवश्यंभावीति तदर्थं न प्रार्थनोपयुज्यते, सूक्ष्मशरीरादीनामत्यन्तप्रलयस्तु प्रार्थनामपेक्षत इति सूच्यते, इयतोऽपि प्रार्थनानुपयोगापादनं श्रीजयतीर्थानामनालम्बनमेव । वस्तुतस्तु—अवश्यंभाविनोऽर्थस्यानुपयुक्तस्य वर्णनाख्यो दोषो द्वैतमत एव—"अथेदं भस्मान्तं शरीरमि"ति वाक्येऽन्ततो गत्वा भवति, नाद्वैतमते ॥

इदं हि वाक्यं द्वैतमते—यद्यपीदं शरीरं भस्मान्तम्, तथापि तदन्तर्गतस्य परमेश्वरस्य न मरणातिप्रसङ्गः। कुतः ? अनिलः परमेश्वराश्रितो वायुरपि यदाऽमृतः, तदा परमेश्वरः किमु वक्तव्य इति व्याख्यायते। तत्र—वायोरमृतत्वेन साधितादधिकोऽर्थः को वा साध्यते ? आश्रयामृतत्वे हि वायुरिव परमेश्वरोऽपि मृतः स्यादिति शङ्का कथमपि नोदेति। यदि वायोर्नित्यमुक्तत्वेन ब्रह्मादिभ्यो विशिष्टत्वात् अतिरोहितज्ञानत्वेनामृतत्वविवक्षणात् न मृतत्वशङ्कोदय इति मन्यते, तर्हि घट्टकुट्यां प्रभातम्; तावतैव परमेश्वरमरणशङ्काया अपि निरासात् "अथेदं शरीरं भस्मान्तमि"ति वाक्यवैयर्थ्यस्यैवापादनात्। देहनाशेन देहिनाशशङ्का तु देहपरमात्मतावाद एव संभवति, देहाश्रितस्यात्मतावादे वा। न च देहस्तदाश्रितो वा परमात्मा। परमात्माश्रितः खलु देह इति विस्तरेणास्यामेवोपनिषदि पूर्वं जयतीर्थटीकायामेव बहुशो विवेचितम्। शिष्टं तु निगदव्याख्यातम् ॥

"ओं क्रतो स्मरे"त्यत्र स्मरणमनुग्रहोन्मुखत्वमेव, न त्वनुभवनाशे संस्कारसहकृतेन मनसा जन्यो वृत्तिविशेष इति श्रीजयतीर्थटीका। अद्वैतमते तु—अग्न्यात्मकतयैव ब्रह्मणोऽत्र संकल्पात्मकत्वेन क्रतुशब्दार्थतया विवक्षणात् तस्य च स्मरणं प्रसिद्धमपि न बाधितमिति यथाश्रुत एवार्थो मन्यते। परमात्मन एव विवक्षायामपि तु—सगुणस्य परमेश्वरस्यैवात्र प्रार्थ्यमानत्वात् तस्य च मायापरिणामात्मकवृत्तिनाशे सति स्मरणं मुख्यमविरुद्धमेव। अन्येषु तु पदार्थविवरणेषु न मतद्वयेऽपि फलभेदे पर्यवसानमिति न विस्तरार्थं प्रयतामहे ॥

एतावदेवात्र निष्कृष्यते—यत् ईशावास्योपनिषदि ईशशब्देनोपक्रमात् शैवविशिष्टाद्वैतवादे तात्पर्यम्, तदनुगुणं च वाक्यान्तराणामपि योजनं श्रीभाष्यदृष्ट्यैवेति शैवा मन्यन्ते ॥

वैष्णवेषु—विष्णुविशिष्टाद्वैतपक्षपातिनस्तु "योऽसौ पुरुष" इति पुरुषपदेनोपसंहारात् ईशपदमपि विष्णुपरं मत्वा तदनुगुणं बहूनि वाक्यान्यन्यथा-

योजयित्वोक्तामुपनिषदं विवृण्वते। तत्र निगमान्तदेशिकानामेकं विवरणम्, कूरनारायणीयभाष्यमपरं विवरणमिति विवरणद्वयं वर्तते। श्रीदेशिकमतानुसारिविवरणं तु—तत्र तत्र श्रीकूरनारायणाचार्याः प्रतिक्षिपन्ति। अद्वैतमतं तूभयेऽपि नोक्तोपनिषन्मतानुसारि भवतीति निरस्यन्ति॥

(क्रमशः)

---

# संस्कृत-नाटकानि

( पूर्वानुवृत्तम् )

[ निबन्धकः—वि. कृष्णस्वाम्यय्यङ्गार्यः ]

इत्येव लक्षणप्रणयनात्कथमस्य ब्राह्मणत्वमेवेत्याग्रह इति चेन्न, साहित्यदर्पण एव स्वकर्मणि भोजनादाविति विवरणाद्धास्यानुगुणत्वाच्च भोजनादिप्रियः परिहासरसिको विदूषक इति सिध्यति। तत्र च ब्राह्मणेष्वेव भोजनप्रियत्वसम्भवात् हीनपुरुषगतस्य दोषस्य हास्यरसानुद्बोधकतयोत्तमपुरुषगतस्यैव विकृतवेषादेर्हास्यप्रचोदकतया च ब्राह्मणस्यैव विदूषकपदालङ्करणसम्भवः। अत एव मालविकाग्निमित्रे, मालविकां वीक्ष्य राज्ञि

"नवकिसलयरागेणाग्रपादेन बाला
स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन।
अकुसुमितमशोकं दोहदापेक्षया वा
प्रणिहितशिरसं वा कान्तमार्द्रापराधम्॥

इति सोत्कण्ठं भाषमाणे, "पारयिष्यसि तत्रभवत्या अपराद्धुमि"ति विदूषकवचनानन्तरं पुनरपि राज्ञा नायकेनाग्निमित्रेण "प्रतिगृहीतं वचस्सिद्धिदर्शिनो ब्राह्मणस्ये" त्यभिदधानेन स्पष्टमेव दर्शितं विदूषकस्य ब्राह्मण्यम्। एवं स्वप्नवासवदत्तायामपि चतुर्थाङ्के वत्सराजेन पद्मावती-वासवदत्तयोः

कतरा ते बहुमतेति पृष्टे विदूषके किमपि समीचीनमुत्तरमप्रतिभाष्य 'किं मामपि बलात्कारेण' इति पृच्छति, राज्ञा च "आं, बलात्कारेण' इत्युक्ते, 'तेन हि न शक्यं श्रोतु'मिति विदूषकवचनानन्तरं पुना राज्ञा 'प्रसीदतु महाब्राह्मणः। स्वैरं स्वैरमभिधीयता'मिति वदताऽपि पक्षोऽयं द्रढितः। एवमेव रत्नावल्यामपि द्वितीयाङ्के सारिकावचनाकर्णनावसरे विदूषकेणात्मानं निर्दिश्य "एवं भणति। एतस्य ब्राह्मणस्य भोजनं देहीति" इति वदता प्रदर्शितमेवौदरिकत्वेन साकं ब्राह्मण्यमपि। शाकुन्तलेऽपि मातलिना पीडितस्य "अब्रह्मण्य"मिति सभयमाक्रोशतो विदूषकस्य वचनात्तस्य विप्रत्वमवगम्यते। तस्माद्ब्राह्मणजातीयस्याप्यस्य कथं प्राकृतभाषेति तु विचारणीयमन्वेषकैरवशिष्यते। श्रमण्यादीनान्तु स्त्रीणामपि वैशेषिकस्संस्कृतव्यवहारेऽधिकारः। "देवद्विजनरेन्द्राणां लिंगिनां संस्कृतं वचः" इति वचनप्रामाण्यात्।

पाठकाः प्रेक्षकाश्च संस्कृतप्राकृतोभयभाषाभिज्ञाः पूर्वकाले आसन। अधुना तु प्राकृतभाषा ग्रान्थिक्यपि संस्कृतापेक्षया क्षीणतरप्रचारा दृश्यते। एवं प्राकृतभाषायाः पूर्वकाले कदा वा व्यवहारो व्यच्छिद्यत, येन नाटकेष्वपि प्राकृतभाषिणां पात्राणां वचनानि विलिख्याधोभागे 'छाया' संयोजनमप्यावश्यकं संवृत्तमिति न ज्ञायते। परन्तु भासादिकालिकेष्वपि नाटकेषु च्छायासंमेलनस्य दर्शनाद् बहोः कालात्प्रागेव प्राकृतभाषाया व्यवहारप्रवाहाद् दूरतो निर्याणमभवदित्यनुमीयते। हर्षभवभूतिराजशेखरादयस्तु व्याकरणान्यधीत्य तेषां नियमाननुसृत्य संस्कृतशब्दान्प्राकृतभाषायां परिवर्त्य व्यलेखिषुरिति तर्कयन्ति। छायासंयोजनस्यान्यकर्तृकताऽपि सम्भवतीत्येष वादो नितरां न रोचते। यथाकथंचिदास्तामेतत्। प्राकृतभाषायास्संमिश्रणन्त्वावश्यकमेवेति भवभूत्यादयस्तदन्वसाधु रित्यङ्गीकारेऽपि बाधकाभावात्। राज्ञामन्तःपुरनिवासिनाञ्च मागधी। चेटीराजपुत्रश्रेष्ठिनामर्धमागधी।

(क्रमशः)

———

# चक्षुषः प्राप्यकारित्वम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—श्रीआशुतोषन्यायाचार्यः ]

एवं चक्षुरप्राप्यैव विषयं गृह्णाति घ्राणरसनत्वक्श्रोत्रान्येन्द्रियत्वान मनोवदित्यनुमानमपि अप्राप्यकारित्वे मानम्, एतेन उत्पलशतपत्रभेदवद् वृक्षचन्द्रमसोस्तुल्यकालग्रहणे क्षणभेदो विद्यमानोऽपि न गृह्यत इति परास्तम्। अतो योग्यतावशादेव स्वस्थानस्थं चक्षुर्विषयं प्रकाशयतीति।

अत्रानेकान्तमतिभिर्यत्तैजसत्वानुमाने व्यभिचारोऽञ्जनादिषु प्रादर्शि तत्तेषामसमीक्ष्यकारित्वमेव प्रकटयति, यतोऽञ्जनादीनां नार्थप्रकाशकत्वमपि तु प्रतिबन्धकमालिन्यापनायकत्वमात्रमतो न तत्र व्यभिचारः।

किञ्च स्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वहेतौ प्रभादृष्टान्ते तैजसत्वसाधके नाञ्जनादिषु व्यभिचारशङ्काऽपि, तेन च सिद्धे तैजसत्वे तदधीनरश्मिवत्तापि भवितुमर्हति, तथा मार्जारादिचक्षुषि चाकचक्यमात्रसत्त्वे चाकचक्यविशिष्टकाचरजतादिवद् गाढान्धकारे तन्नेत्रस्य प्रत्यक्षं न स्यात अतः क्षुद्राङ्गारवत्पदार्थान्तराप्रकाशकत्वेऽपि स्वयं तेजस्त्वादेव तन्नेत्रं तत्र प्रकाशते। दिनकरखरकरनिकरसरणसरण्या अपतिष्णोः काचकूपोदरगतजलस्य नयनरश्मिमार्गेण प्रपातः स्यादिति तु बालभाषितम्। द्वितीयानुमानं त्वनुकूलतर्कविरहादश्रद्धेयमिति।

अत्र कन्दलीकारश्रीधराचार्या एवं कथयन्ति यत क्षुद्रं चक्षुस्तथा बाह्यालोक एतयोः संयोगेन विशालमन्यच्चक्षुरुत्पद्यते, तच्च समकालमेव शाखाचन्द्रमसौ प्रकाशयतीति। तत्र क्षुद्रचक्षुषा सम्मुखस्थबाह्यालोकस्यैव संयोगेन महच्चक्षुरुत्पद्यते न तु पाश्चात्त्यबाह्यालोकस्य संयोगेनेत्यत्र प्रमाणं मृग्यं विद्वद्भिः। तथा स्वीकारे च पाश्चात्त्यवस्तूनामपि प्रत्यक्षमापद्यत इति।

पाश्चात्यास्तु—चक्षुषो न स्वतन्त्र आलोको नापि पार्थिवादिवस्तूनां किमपि स्वकीयं रूपं, केवलस्यालोकस्यैव सर्वविधं रूपं विद्यते, आलोकस्तु तद्रूपविशिष्टः सँश्चक्षुषि पतति तस्यैव रूपस्य प्रत्यक्षं भवति ।

(क्रमशः)

———

# वेदान्तौतुपलकारिका

( पूर्वानुवृत्ता )

[ निबन्धकः—श्रीरमेशचन्द्रचक्रवर्तिवेदान्ततीर्थः वि-ए.]

लिंगश्रुतीनामेकत्वं चतुर्थे दर्शितं क्रमात् ।
द्विशतं सूत्र-संख्या च षट्पंचाशतपरिष्कृतम् ॥
अत्राधिकरणानि स्युश्चत्वारिंशच्च सप्त च ।
जीवानां परलोकादि-गतिर्यत्र निरूपिता ॥
तृतीये प्रथमे पादे विरतेश्च विनिर्णयः ।
तत्त्वमसीतिवाक्यस्य शोधनं चापि संधृतम् ॥
सगुणगुणसंहारो विद्यासु च तृतीयके ।
ब्रह्मणि गुणोपहृतिः पुनरुक्त-पदादिषु ॥
निर्गुणस्य हि ज्ञानस्य बहिरङ्गादिसाधनम् ।
श्रवणमननादीनामन्तरङ्गादिसाधनम् ॥
तृतीये चात्र निर्णीतं तत्राधिकरणानि च ।
सप्तषष्टिश्च ज्ञेयानि सूत्रसंख्या च द्वित्रयम् ॥
चतुर्थे सगुणब्रह्मज्ञानेन जीवतो गतिः ।
जीवन्मुक्तिः समाख्याता श्रवणाद्युपसेवनैः ॥
द्वितीये म्रियमाणस्य देहोत्क्रान्तिनिरूपिता ।
मृतस्योत्तरमार्गश्च निर्णीतो गुणवेदिनः ॥

तुरीय-तृतीये चैव निर्गुणब्रह्मवेदिनाम् ।
उक्तं विदेहकैवल्यं सगुणध्यायिनामपि ॥
सालोक्यं ब्रह्मलोके च तथैव सुनिरूपितम् ।
तत्राधिकरणानि स्युरष्टात्रिंशच्च संख्यया ॥
सूत्राण्यष्टसप्ततिस्तु समष्टिः प्रागुदाहृता ।
विषयो विशयश्चैव पूर्वः पक्षस्तथोत्तरः ॥
प्रयोजनसंगती च षडङ्गानि विदुर्बुधाः ।
पूर्वन्यायस्य सिद्धान्तं युक्तिं चालोच्य तत्परम् ॥
परे तु पूर्वपक्षस्य युक्तीस्तत्राक्षिपेत् क्रमात् ।
अथातो ब्रह्मजिज्ञासा जन्माद्यस्य यतस्ततः ॥
शास्त्रयोनित्वात्तृतीयश्चतुर्थस्तत् समन्वयात् ।
ब्रह्मणो हि विचार्यत्वं लक्षणं वेदकर्तृता ।
तथा वेदैकमेयत्वं ख्यापितं क्रमतस्ततः ॥
वेदान्तानां च ब्रह्मैकपरत्वं तु तुरीयतः ।
चतुःसूत्रीति विख्याता सूत्रसारचतुष्टयम् ॥
आद्यसूत्रैश्चतुर्भिस्तु क्रमेणात्मविचार्यता ।
ब्रह्मलक्षणवेदैकपरत्वमेव निश्चितम् ॥
ब्रह्मसद्वाच्यता प्रोक्ता नाशब्दमीक्षतेरिति ।
नासत ईक्षणं कर्म गौणश्चेन्नात्मशब्दतः ॥
तन्निष्ठमोक्षोपदेशाद्धेयत्ववचनाच्च वै ।
स्वाप्ययाद्गतिसामान्याच्छ्रुतत्वाच्चैव सूत्रगैः ॥
अष्टभिस्तु ततः प्रोक्ता ब्रह्मानन्दस्वरूपता ।
यथानन्दमयोऽभ्यासाद् विकारशब्दतो न चेन् ॥
न प्राचुर्याच्च तद्धेतुव्यपदेशाच्च नेतरः ।
अनुपपत्तेश्च गीयते मान्त्रवर्णिकमेव च ॥

भेदोपदेशात् कामाच्च नापेक्षा ह्यनुमानतः ।
तन्निष्ठस्य च तद्‌योगं शास्ति सूत्राष्टकं क्रमात् ॥
हिरण्मयपदवाच्यत्वमन्तस्तद्धर्मदेशतः ।
भेदोपदेशाच्चान्यश्च द्वाभ्यामेव क्रमात्ततः ॥
आकाशस्तल्लिङ्गादितिचाकाशशब्दवाच्यता ।
अतएव प्राण इति ब्रह्मणः प्राणवाच्यता ॥
ज्योतिश्चरणाभिधानाच्छन्दोऽभिधानतो न चेत् ।
न तथा चेतोर्पणनिगदादिव दर्शनम् ॥
भूतादिपादव्यपदेशोपपत्तेश्चैवमित्यपि ।
उपदेशभेदान्नेति चेन्नोभयस्मिन विरोधतः ॥
प्राणस्तथानुगमान्न वक्तुरात्मशासनात् ।
इति चेदात्मसम्बन्धभूमा ह्यस्मिन्निति क्रमः ॥
शास्त्रदृष्ट्या तूपदेशो वामदेवोपमा यथा ।
जीवमुख्यप्राणलिङ्गान्नेति चोपास्तिभेदतः ॥
न त्रैविध्याद् ब्रह्ममुख्यप्राणस्य च जीवस्य वा ।
श्रितत्वादिह तद्‌योगादिति सूत्रचतुष्टयैः ॥
ब्रह्मणः प्राणशब्दस्य व्युत्पादत्वं समर्पितम् ।
अत्राधिकरणानि स्युरेकादश क्रमेण वै ।
एकत्रिंशत्सूत्रसंख्या आद्ये शारीरके स्फुटा ॥४४॥

———

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता । Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

रूपं पश्यसि यन्मे मिथ्या तदिदं निरावाधम् ।
न विना तत्त्वविबोधं विलयो मिथ्याधियो भावी ॥१३॥
गुरुभिः कृतमनुवृत्तं बहुलं नाम प्रियारामैः ।
पितृकृतमाद्याश्रमजं तैः स्मरणीयं न नामेदम् ॥१४॥
शृणु मे गुरुकृतसंज्ञां हरिरिति नारायणेत्येवम् ।
केशव माधवनाम्नाप्यवदन् गुरवो यथाकालम् ॥१५॥
विपिने शैलगुहायां तटिनीतीरे तथा नीरे ।
पवने गगने नगरे वसामि सूरे विधौ दूरे ॥१६॥
नह्येकत्र गतोऽहं भुवनं सर्वं ममाधारः ।
रूपं मम रसकूपं न मननधर्माप्यलं द्रष्टुम् ॥१७॥
सर्वत्रैव मदीयो बान्धवसङ्घः स्थितिं धत्ते ।
अहमभिजानाम्येवं नैव स जानात्यहो दुःखम् ॥१८॥
तुङ्गमहीधरशृङ्गे विपिनोत्सङ्गे स्थिताः शान्ताः ।
प्रणयं मयि गतमायं दधते गेहस्थिता नैवम् ॥१९॥
प्रेमविधौ विबुधानां नगरस्थानां नवीनानाम् ।
भाग्यादहमनवाप्तो रागं दृशदः समानानाम् ॥२०॥
शासति मम सुहृदो ये देहविनाशप्रतिष्ठानम् ।
सर्वप्रियपरिहानं दुरिताधानं श्रुतिध्वानैः ॥२१॥
दुर्जयतेजोजालैः श्वापदसङ्घस्ततो भीतः ।
प्रसरति नूनं दूरे विजहत् क्रूरां मतिं शान्तः ॥२२॥
वेशं पश्यसि यद्वद् मदीयदेहे तथैवास्ते ।
सुहृदामपि मम तेषां रज्यति चेतो न संसारे ॥२३॥
वर्षातपजनिदुःखं सहतेऽवाधं सुहृत्सङ्घः ।
अशनस्वपनवियोगात् कीकससारं वपुर्लक्ष्यम् ॥२४॥
नश्वरसंसृतिसारो विविधाचारो मुनिं प्राज्ञम् ।
कथयति विततोन्मादं तत्त्वविबोधात् परिभ्रष्टः ॥२५॥

मुनिरपि तत्त्वविवेकी तमतनुरागं विमुह्यन्तम् ।
पश्यति किं न वराकं करुणासुधया परिस्नातः ॥२६॥
हन्ति श्वापदमाला हरिणं शान्तं वने भ्रान्ता ।
सोऽपि च शष्पं भुङ्क्ते मृदुलाचारः परिभ्राम्यन् ॥२७॥
एवं व्यक्तिविशेषाद् मनसो वृत्तिः पृथग्भूता ।
एको वक्ति किलान्यं स्वगुणापेक्षी मुहुर्गर्ह्यम् ॥२८॥
विषयासक्तो जीवः प्राप्तुं विषयं परिश्राम्यन ।
किं वा नैव विधत्ते दुष्कृतशतकं निराबाधम् ॥२९॥
दैवततोषव्याजादजमृगमांसान्युपस्पर्शम् ।
व्यथयति कोमलचित्तान सममुपजनयन द्विजः पङ्कम् ॥३०॥
क्षत्रः प्रधनप्रार्थी धरणिं भोक्तुं सुखे कामी ।
रिपुकुलशोणितसिक्तां तामिह कुरुते मृषादर्पी ॥३१॥
चौरः परधनहारी दुष्कृतकारी सुखं लब्धुम् ।
अवति स्वजनसमूहं सत्यपि मार्गान्तरे पुण्ये ॥३२॥
वैश्या वाणिजकृत्ये छलयन्नन्यान वृथा पण्यैः ।
क्वचिदपि माने स्वल्पैः स्वल्पकमानः पराभूतः ॥३३॥
कृषिविधिवर्धितशस्यः स्वकसुखवश्यो हतालस्यः ।
पार्थिवभोग्यानंशान निजसुखहेतोरुपादत्ते ॥३४॥
लुप्ता दैवतबुद्धिर्गोगणविषया गृहस्थानाम् ।
गोरसपानतृषाया वृद्धिं परितः समुद्वीक्षे ॥३५॥
नश्वरवपुरतियत्नात पातुं नित्यं लसत्कामः ।
किं नहि कुरुते पापं परत्र दुःखं चिरं भोक्तुम् ॥३६॥
क्षयमुपचयमपि नित्यं यदुपायाति प्रतिस्पन्दम् ।
तस्य विलासव्यसनैर्विमलीकारः फलान्मुक्तः ॥३७॥
कतिपयदिवसस्यान्ते यद्वपुषः स्यात क्षयो नूनम् ।
मृदि वा सलिले वह्नौ स्थिरधीस्तस्मै न तु श्रान्तः ॥३८॥

युक्तायुक्तविवेको यदि ते नाहं तदोन्मत्तः ।
विश्वे नश्वरवश्याः परितो भाष्याः समुन्मत्ताः ॥३९॥
धनमददुर्मदचित्तः सततं स्वसुखे समासक्तः ।
गणयसि न त्वं दीनान दुःखसहस्राश्रयानेतान ॥४०॥
सरितं दर्शयसि त्वं सर्वजनानां समाकाराम् ।
धनमपि किं न समेषां सकलं साधारणं वेत्सि ॥४१॥
सर्वं दिनमुपवासो क्षुधितस्वजनात् परित्रासी ।
नरकं भुङ्क्ते कश्चित त्वं सुरलोकप्रियं धत्से ॥४२॥
भृत्यास्तव गुरुकृत्या रविकरगत्या परिक्लान्ताः ।
विदधति बहुलक्लेशान त्वमसि निषण्णः स्वपर्यङ्के ॥४३॥
तव वपुरपि यन्मूलं मूलममीषां न तद्भिन्नम् ।
यस्माद् भवतः क्लेशः क्लेशस्तेषां न किं तस्मात ॥४४॥
खरमिव दुर्भरभारं वाहयमानो निजान भृत्यान ।
हृदयं प्रस्तरसारं गमयसि बोधात परिभ्रष्टम ॥४५॥
स्वार्थे केवलमर्थी त्यक्तपरार्थः परे लोके ।
परमं दुखं भुङ्क्ते नरकं लोकः सुदुर्वारम् ॥४६॥
विधिना येन निरूढं स्वीयं दुःखं परं दृप्तम् ।
तेन परेषामपि तत् साधुजनानां परिज्ञेयम् ॥४७॥
तरणौ तव धनराशिस्तिष्ठति यावानसंख्येयः ।
तस्य परार्थनियोगः फलवान व्यर्थोऽन्यथावृत्तिः ॥४८॥
तिमिरं परिहर घोरं विमलविचारं समासीदन ।
स्वार्थवदेव परार्थं काम्यं मत्वा प्रवर्त्तेथाः ॥४९॥
श्रुत्वा वचनं दक्षः शङ्खपतिस्तं रुषावादीत ।
क्षीव वचस्ते चित्रं विस्मयपात्राण्यकार्षीन्नः ॥५०॥
अनुपस्कृति बहुलार्थं सुश्रवशब्दश्रिया जुष्टम ।
आकाङ्क्षादिप्रचितं सगुणं दोषाद् विनिर्मुक्तम् ॥५१॥

बहुगुरुतत्त्वसनाथं भावसमृद्ध्या सुसन्नद्धम् ।
प्रतिभटपक्षविमर्दं स्वहृदयभावप्रतिष्ठानम् ॥५२॥
वचनमवोचस्तादृक् शक्तो विबुधो न यद् वक्तुम् ।
स्थिरनश्वरपरिबोधः स्थिरतामगमद् भवच्चित्ते ॥५३॥
त्यजसि क्वचन क्षैवं क्वचिदपि भूयस्तदायातम् ।
क्वचिदसि समुदासीनः प्रचितानर्थान् दिशन्नर्घ्यान् ॥५४॥
आत्मा निजकृतिभेदाद् बहुलान् देहान् क्रमेणाप्तः ।
फलमुपभुङ्क्ते चित्रं क्वचिदपि पूर्वस्मृतिर्नास्ते ॥५५॥
आन्ध्यं जगति विधाता विदधद् घोरं भवागारे ।
सर्वप्राणिनिकाये सुखसम्भोगावधिं दत्ते ॥५६॥
विष्टः कीटशरीरे प्राङ् नरदेहोद्भवं भावम् ।
स्मृत्वापेक्षिकदोषं दुःखसहस्रं न वा भुङ्क्ते ॥५७॥
जन्मान्तरजविशेषं स्मरता भवता ध्रुवं लब्धः ।
धातुः कृपयोन्मादो यस्माद् विकृतिर्न ते काचित् ॥५८॥
मीनप्रभृतिशरीरैः परिगतपूर्वैः क्रियाभेदैः ।
प्राप्तं भगवत्साम्यं न तारतम्यं समालोके ॥५९॥
आत्मद्वैतविचारे भगवद्देहास्तवैवामी ।
तस्य च कृतयस्तास्ताः कथमिव वाच्या न ते स्वीयाः ॥६०॥
उपनिषदथवाधीता बहुशो नूनं त्वया पूर्वम् ।
येनात्मनि सुविशुद्धे जगतो व्याप्तिस्त्वया दृष्टा ॥६१॥
रूपं तव नो नयनं पश्यति यस्मादसंबाधम् ।
कथमिव मूर्तिरदृश्या भवतः कल्प्या समक्षेयम् ॥६२॥
रसलवमपि ते देहे भूमिपरागादिभी रूक्षे ।
क्वचिदपि नैव समीक्षे किमु रसकूपं वदस्येतम् ॥६३॥
राज्ञि स्निह्यति राजा सचिवोऽमात्ये परोऽन्यस्मिन् ।
तव सममैत्री निखिले न किमुन्मादात् समाशङ्क्या ॥६४॥

October, 1943 Reg. No. C. 1073



सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः

भारते मातु भारती

संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| October, 1943 | १८६५-शकीये आश्विने<br>२६श-वर्षस्य ६ष्ठ-संख्या | Vol. XXVI, No. 6 |
|---|---|---|

## उपनिषदामद्वैतपरता

( पूर्वानुवृत्ता )

द्वैतिनोऽपि श्रीमदनानन्दतीर्थादयोऽद्वैतमतनिरसनेनैवोक्तोपनिषदं व्यवस्थापयन्तोऽपि—बहून्येव वाक्यानि स्वमतानुगुणं योजयितुमध्याहारादिना, पदविशेषाणां बहूनामप्रसिद्धार्थकल्पनादिना च स्वीयं मतं राद्धान्तयन्ति ॥

सर्वं चेदमद्वैतमते दूषणजातं न प्रसरति, यत्र विनैवार्थध्याहारादिकं यथाश्रुतमेवेयमुपनिषद् व्याख्यायते । ईशोपनिषद्वाक्यमेकमेव ब्रह्ममीमांसायाम्—पुरुषार्थाधिकरणे—''नियमाच्चे''ति सूत्रे ''नाविशेषादि''ति सूत्रे च ''कुर्वन्नेवेह कर्माणी''ति विचारावसरे परामृश्यते । तत्र—''नियमादि''ति सूत्रे पूर्वपक्षावसरे—कर्मशेषत्वं ज्ञानस्येत्येतदुपोद्बलनार्थमिदं वाक्यं मन्यते, ''नाविशेषादि''ति सूत्रे तु विद्यासम्बन्धं विनैवोक्तवाक्यं प्रवर्तत इति मन्यते,

न तु स्वप्राधान्येनेति सिद्धान्तावसरे व्यवस्थाप्यते। "स्तुतयेऽनुमतिर्वे"ति तदनन्तरसूत्रे तु—विद्यास्तुतय एव कर्मानुष्ठानमिति प्रतिपाद्यते। सर्वथा तु —नेह जन्मनि कर्मानुष्ठानं विना ब्रह्मविद्यानधिकार इति श्रीभाष्यसिद्धान्तविरोधेनैवोक्तवाक्यं ब्रह्ममीमांसायां योज्यते। श्रीभाष्यकारा अपि—वाशब्दोऽवधारणार्थः, ईशावास्यमिति विद्याप्रकरणात् विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियमिति व्याचक्षाणाः स्तावकत्वमेवास्य वाक्यस्यानुमन्यन्त एव। तेन च वस्तुगत्याऽविद्वद्विषयमेवेदं वाक्यमिति सिध्यत्येव, इति "कुर्वन्नेवेहे"ति वाक्यस्याविद्वद्विषयत्वं भगवत्पादाभिमतं न प्रकरणादिविरुद्धम्। "नाविशेषादि"ति विद्वदविद्वत्साधारण्यमुक्तवाक्यस्येति वर्णनेन तु सूत्रकारा अपि—"धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरि"ति भगवत्पादभाष्यं विशदमनुगृह्णन्ति। अपराणि तु कान्यपि वाक्यान्येतदुपनिषद्गतानि न ब्रह्ममीमांसायां समालोच्यन्त इति पदानामन्यार्थकल्पनादिकं सर्वमत्र न सौत्रम्, न वा बादरायणादिसम्मतमिति प्रतिभाति॥

इदमत्र भेदसाम्राज्यकाराणां मतम्—वस्तुतस्सजातीयविजातीयस्वगतभेदरहिते अत एव निर्विशेषे चिद्रूपे परस्मिन्ब्रह्मणि सर्वोऽपि प्रपञ्चः शुक्ताविव रजतमध्यस्तः, अत एव शुक्तिरूपाधिष्ठानयाथार्थ्यज्ञानेन रजतमिव 'तत्त्वमसी'त्यादिवाक्यजन्येन साक्षात्काररूपेण निर्विशेषब्रह्माहमस्मीत्येवमात्मकज्ञानेन बाध्यत इति मिथ्याभूत एव। रजताध्यासहेतुभूतशुक्तिगतसादृश्यादिदोषस्थानापन्नश्चात्र प्रपञ्चाध्यासहेतुभूतो दोषः भावरूपाज्ञानादिशब्दितानाद्यविद्यैव। इत्थं च निर्विशेषब्रह्मण एवानाद्यविद्यासंबन्धः, तन्निबन्धनः अहं नाना इति आत्मनि विविधप्रपञ्चवैशिष्ट्याध्यासः, तन्मूलकस्सुखदुःखानुभवश्च बन्धः। सोऽपि वस्तुतोऽविद्यामात्रतया मिथ्याभूतः। निरुक्तज्ञानविशेषेण, विद्यमानशरीरानुवृत्तावपि ईदृशबन्धनिवृत्तिरेव मुक्तिः। सापि ब्रह्मण एव। तदयं तन्मते तत्त्वहितपुरुषार्थविवेकः—निर्विशेषं ब्रह्माविद्यावशात्स्वयमेव बम्भ्रमीति, अविद्यानिवर्तकज्ञानं 'तत्त्वमस्या'दिवाक्यजन्यमविधेयम्, तेन मिथ्याभूताविद्यातत्कार्यनिवृत्तौ भ्रान्तिराहित्येन शुद्धचैतन्यस्थितिर्मुक्तिरिति। तच्च

ब्रह्म समस्तज्ञानागोचरः, समस्तशब्दावाच्यं च। अत एव यत्किञ्चित्प्रमाणाधीनसिद्धि न भवति, अपि तु स्वप्रकाशतया स्वयमेव सिद्धम्। एवं नित्यशुद्धबुद्धमुक्तस्वप्रकाशनिर्विशेषब्रह्मात्मैक्यमेव सोपबृंहणास्सर्वे वेदान्ताः प्राधान्येन प्रतिपादयन्ति। तत्समानार्थमेव गीताशास्त्रं ब्रह्मसूत्रजालं च इतीयं मृषावादिनां मतप्रक्रिया।

एवमङ्गीकारे सर्वा अप्युपनिषदः, कृत्स्नं गीताशास्त्रं समग्रं ब्रह्मसूत्रजातं च विरुध्यन्त इति कृत्स्नविरोधप्रकाशावश्यकतायामपि स्थालीपुलाकनीतिमनुरुन्धानाः त्रिष्वपि कांश्चिदेव स्फुटतरविरोधानत्र प्रकाशयामः। विवेचनचतुरा विमत्सरा विद्वांस एव विशेषतः प्रमाणमेतत्सारासारयोरिति प्रतीमः॥

तथाहि—सर्वोपनिषदपेक्षया प्रथमपरिगणितायाम् ईशावास्योपनिषदि प्रथमोऽयं मन्त्रः 'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत। तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धन'मिति। अत्र पूर्वार्धं तावत्परमतविरुद्धमुपलभ्यते। इदं सर्वं जगत् सर्वनियन्त्रा व्याप्यं स्वस्मिन् स्वेन वासनीयं वा इति तदर्थस्स्वरसतः प्रतीयते। उपबृंहणञ्च 'मया ततमिदं सर्व'मित्यादि। अत्र सर्वनियन्तृवाचकेनेशपदेन जगच्छब्दनिर्दिष्टस्य सर्वस्य परमात्मनियाम्यत्वम् तत एव तस्य सत्यत्वम् परमात्मनस्तन्नियन्तृत्वम् तत एव तदौपयिकज्ञानशक्त्यादिकल्याणगुणगणवत्त्वम् ईट्पदवाच्यत्वम् ईशेशितव्ययोः स्वाभाविकभेदश्च अविदिततदीयविलक्षणवेदान्तार्थजातस्य शिष्यस्य श्रवणकाले धियमधिरोहति। नह्येतेष्वर्थेषु कस्यापि केनापि हेतुना बाधलेशमपि प्रत्येति कदाऽपि प्रत्येता। मातापितृसहस्रेभ्योऽपि वत्सलतरम्, अत एवात्मोज्जिजीवयिषया प्रवृत्तं शास्त्रं कथमीदृशं बहुविधानर्थहेतुं भेदजातं पूर्वमेव विविधभेदभ्रमसागरे परिप्लवमानं प्रत्युपदिशेत्, उपदिशद्वा समुज्जीवयेत ? अतः प्रथमोपनिषत्प्रथममन्त्रप्रथमभाग एव परेषामत्यन्तप्रतिकूलः। पररीत्या 'सर्वमिदं न वस्तुसद्गृह्णीयाः, परमात्मा एक एव परमार्थतोऽस्ति, सर्वमिदं तद्भ्रान्तिसिद्धमित्येव गृह्णीयाः इत्येवंरूपेण ह्युपदेशेन भवितव्यम्। यस्तावदर्थः प्रेक्षावता स्वानर्थहेतुः पूर्वगृहीतः,

तन्निरसनपूर्वकं वस्तुतत्त्वोपदेशो हि वत्सलतरकृत्यम्, न तु पूर्वसिद्धभ्रमादधिकभ्रमोत्पादनम्। ततश्च सर्वमपि प्रपञ्चं स्वतन्त्रतया गृहीतवतशिंष्यस्य, जगतः ईश्वरपारतन्त्र्योपदेशेन स्वातन्त्र्यग्रहणं प्रतिषेधत्याचार्य इत्येवाभ्युपगन्तव्यम्। यत्तु ईशा=इदं सर्वं अहमेवेति स्वात्मभावनया, सर्वमिदं जगत्—कर्तृत्वभोक्तृत्वादिरूपं विकारजातम् वास्यम्—आच्छादनीयं निरसनीयमिति व्याख्यानं, तत् अतिक्लिष्टम्, ईशा भुञ्जीथाः इति पदद्वयप्रतिपन्नजीवपरभेदविरुद्धम् विविधेशितव्यसापेक्षेशनप्रतीतिविरुद्धम् निर्युक्तिकम् निष्प्रमाणम् अनन्यथासिद्धबहुप्रमाणपदवीदवीयश्चेत्युपेक्ष्यम्। किं बहुना? 'स्वेनात्मना ईशा' इतीदं सर्वात्मना स्वार्जितमेवेति विशेषविद्भिर्विज्ञेयम्॥

अत्रेदं बोध्यम्—अस्यामुपनिषद्यष्टादशैव मन्त्राः। तत्र द्वितीयो मन्त्रो नवमाद्याश्च कर्मदेवतोपासनादिपरा इति, प्रथमः तृतीयाद्यष्टमान्ताश्च मन्त्रा निर्विशेषतत्त्वपरा इति च परेषां मतम्। तत्र प्रथमस्य न निर्विशेषपरत्वमित्यवोचाम। उपरि षट्सु मन्त्रेष्वपि न जगदपलापः क्वापि प्रतीयते; प्रत्युत सर्ववस्तुव्यापित्वादिकमेवोच्यते; विशिष्य चाष्टमान्ते घुष्यते—'कविर्मनीषी परिभूस्स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यस्समाभ्यः" इति परमात्मनोऽनवद्यस्य सर्वज्ञत्वसत्यजगत्स्रष्टृत्वादिः कल्याणगुणः। एवञ्च सर्वत्र क्लेशेनैव तदिष्टतत्त्वपरत्वमारोप्यमिति स्थिते किमिति द्वितीयादीन् मन्त्रांस्त उपेक्षन्त इति न विद्मः। तत्रापि हि, 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः कश्चित। एवं त्वयि न। इतोऽन्यथाऽस्ति। न कर्म। लिप्यते नरे तत' इत्येवं कुसृतिः प्रसृतिं लभते। यद्यत्र स्वरसयोजनाविघाताद्विद्वेषः, कथन्तरां सर्ववाक्यार्थभङ्गेन प्रथमादिमन्त्रेष्वसंभावितार्थारोपः? एवं प्रथमद्वितीयमन्त्रयोः भुञ्जीथाः, मा गृधः, त्वयि इत्येवं मध्यमपुरुषयुष्मच्छब्दाभ्यामेकाधिकारिविषयत्वे विस्पष्टे किमिति विभिन्नाधिकारिकल्पना? तर्हि कृत्स्नेयमुपनिषदनाम्नाताद्वैता प्रसज्यत इति चेत्—तत एव त्यज्यते द्वैतवादः—इति॥

यथा चात्र—ईशा वास्यत्वमद्वैतमतानुगुणमेव स्वरसम्, कर्मानुष्ठानोप-

योगस्याद्वैतमतेऽपि स्वीकाराद् द्वितीयमन्त्रोऽपि तत्रैव स्वरसः, व्यावहारिकसत्यत्व एव "याथातथ्यतोऽर्थानि"त्यादिरपि स्वरसः, "अनेजदेकम्" "शुक्रमकायमि"त्यकायादिपदप्रयोगस्तु श्रीभाष्यानुयायिमतेऽत्यन्तमेव विरुद्धः, उपनिषदन्तरैकवाक्यताऽपि मुक्तिस्वरूपादिविषयेऽद्वैतमतानुगुणैव वर्तते, तथा विशदं पूर्वमेव विवेचितः ।

---

# संस्कृत-नाटकानि

( पूर्वानुवृत्तिः )

[ निबन्धकः—वि· कृष्णस्वाम्यय्यङ्गार्यः ]

योधनागरिकाणां दाक्षिणात्या । विदूषकादीनां प्राच्या । धूर्तानामावन्ती । नायिकायास्सखीनाञ्च शौरसेनी"त्येवमादयो भाषानियमा भरतमुनिना विदधिरे । परन्तु लाक्षणिकास्तान्नाङ्गीकुर्वन्ति । संस्कृतभाषा राजामात्यादीनामधुनातनेषु प्राचीनेष्वपि नाटकेषूपलक्ष्यते । तस्मादेव भरतनियमाः केचिदनुसरणीया इति प्रतिपादितम् । भरतेनापि 'अत्र नोक्तं मया यच्च लोकाद्ग्राह्यं पुनस्तु तदि'त्युक्त्या स्वीयनियमातिक्रमस्याभ्यनुज्ञानात । उत्तरत्र रङ्गमंटपलक्षणं तन्निर्माणप्रकारादिकञ्च विवेचयन्भरतमुनिरादौ नाटकस्य देवलोकाद्भूमाववतरणमित्येतदुपाख्यानमारम्भाध्याये निरूपितवान ।

नाटकस्योत्पत्तिः

पुरा त्रेतायुगे कामक्रोधादिषु मानवकुलशत्रुषु सर्वत्र विजृम्भमाणेषु सुखदुःखभाजनं लोको नितान्तं विषसाद । महेन्द्रादयश्च देवताः प्रजापतिमुपगम्य दृश्यां श्राव्यां सर्वेषामपि भागमङ्गीकर्तुमवकाशं ददानां कामपि क्रीडामनुगृहाणेत्यभ्यर्थयामासुः । भक्तानां देवानामभ्यर्थनामाकर्ण्य प्रसन्नचित्तो भगवान्प्रजापतिस्तथैवास्त्वित्यंगीकृत्य साहित्यभागं पाठ्यनामानमृग्वेदात् अभिनयं यजुर्वेदात्संगीतं सामवेदाद्रसानथर्ववेदाच्च यथायथमुपादाय नाट्यनामानं पञ्चमं वेदमसृजत । भरतस्तन्नाट्यं शतेनात्मजै-

रप्सरोभिश्च समन्वित इन्द्रध्वजोत्सवे प्रदर्शयति स्म। देवताभिश्च दैत्यानां पराजयस्तस्मिन्नाट्ये निबध्यते स्म। अतस्तस्य नाट्यस्य प्रयोगारम्भ एव कुपिता राक्षसाः कलहमुपचक्रमिरे। क्रुद्धः शतक्रतुरुत्थाय ध्वजदण्डेन तान्सर्वानभिहत्य पराजित्य निष्कासयामास। इतः परमीदृशः कलहो माभूदित्येतदर्थं प्रजापतिर्नाट्यमन्दिरनिर्माणमादिदेश। तस्य मंटपस्य नानाभागेषु लोकपालाः प्रबलानि देवतान्तराणि च प्रतिष्ठित्य राक्षसान्पराभावयन। एवं लोकपालैः परिरक्षिते नाट्यमन्दिरेऽभिनयस्सुखेन निर्वर्तते स्म।

एतस्मिन्नन्तरे ब्रह्मणस्समीपमागम्य, "भगवन, वयमपि देवता इव भवत एव पुत्राः किल, तदस्माकमवज्ञाकारकं नाट्यमिदं कुतोऽभिनीयते, सर्वानपीमान्देवानाहूय नाट्यप्रयोगं प्रतिषेध" इति तमाचिक्षिपुः। प्रजापतिस्तु समन्दहासमेषामाक्षेपवचनमाकर्ण्य मौढ्येनैव नाट्यस्य प्रयोजनमविज्ञाय मुधा प्रलपंत्येत इति मनसिकृत्य सानुकम्पमुपदिदेश—"मा भवन्तो वृथैवास्थाने कोपमाहार्षुः। नाट्यं हि लोके दृष्टस्येतिवृत्तस्य भाव्यमानानां भावान्नाञ्च प्रदर्शनरूपमनुकरणम्। धर्मः क्रीडा शमो दमः कामो हास्यं युद्धं वधः तिरस्कारः उपायः अपायः इत्यादयस्सर्वेऽपि विषया अत्र रमणीयतया संनिविशन्ते। कामुकाः कामं, दुर्विनीता निग्रहं, विनीता दमं, भीरवो धाष्टर्यं, अज्ञानिनो ज्ञानं दुःखिताः स्थैर्यं, अर्थोपजीविनो द्रव्यमित्यत्र नाट्ये सर्वे सर्वं लभन्ते। एवं मया वेदानां सारमुद्धृत्य विनिर्मितमेतन्नाट्यं सावस्थं लोकवृत्तान्तमनुकुर्वाणं हितानि सम्यगुपदिशत सुखं विनोदं धैर्यञ्च संपादयति। नाट्येष्वनुपलभ्यमानं ज्ञानं विद्या शिल्पं कला कर्म योगो वा न किञ्चित्पदार्थान्तरमस्ति। सुखदुःखविमिश्रस्य लौकिकवृत्तान्तस्यानुकीर्तनमेव नाट्यम्। तस्मादत्र भवतां कोपे न किमपि कारणमस्ती"ति। एतमुपदेशमाकर्ण्य ज्ञाततत्त्वा राक्षसाः प्रतिन्यवर्तन्त।

एषा कथा यद्यपि धार्मिकेण पौराणिकेनावरणेनाच्छादिता तथाऽपि किञ्चिदत्रापि रहस्यमन्तर्भवतीति विमर्शकानामभिप्रायः। भरताचार्येण क्रान्ति (Revolution) पुरुषेणेव नवीनतया प्रतिष्ठापितां नाट्यकलां सुख-

दायिनीमपि केचिद्भारतीयास्तत्त्वज्ञानिनो विजगर्हिरे, यथा प्लेटोमहाशयः समग्रमपि साहित्यसाम्राज्यमाध्यात्मिकाभ्युन्नतौ प्रतिबन्धकमुपन्यास्थत्। एवं प्रचलति सार्वत्रिके विरोधे नाट्यकलायाः पुरस्कारो विहन्येतेति संजाताशङ्को भरताचार्यस्स्वयमेव नाट्यस्य गुणानरिस्टोटल इव काव्यस्य सम्यगुपन्यस्यञ्जनानामनुरागसम्पादनाय प्रायतत। एतमेव वृत्तान्त-मुपनिबध्य कथामेकामपि कल्पयामासे"त्येतेषामाशयः। परन्तु नैतावता नाटकस्योत्पत्तिः कथमभूदिति निर्धारयितुं शक्यते। उदाहृतयाऽनया कथया नाट्यस्य गुणानामशेषाणामुपवर्णनेऽपि तस्याः प्रामाणिकत्वे संशयस्य जागरूकतया निर्णयानुपयोगित्वात्। देवलोकादीनामपि काल्पनिकता-मनुसन्दधानानां पाश्चात्त्यानां नाम कथायामस्यां विश्वासः संभविष्यति ?

नाट्यादेव नाटकस्योत्पत्तिरिति केचित्। "परन्तु सम्भाषणाभागस्या-समवधाने केवलेन नाट्येन नाटकस्योत्पत्तिर्न वक्तुं शक्यते। पाणिनेः प्रागेव नाटकानि पूर्णरूपाण्यासन्नित्यपि न वक्तुं शक्यम्। भिक्षुनटसूत्रयो-रित्यत्र नटपदेन नर्तकानामेव व्यपदेशोऽभिनेतृणां वेति संशयस्याद्याप्य-निवारणात्। 'महाभारतेऽपि नटशब्दस्य बहुत्र प्रयोगात् तस्मात्प्राचीना-न्येव नाटकानि स्यु'रिति वादस्याप्येषैव गतिः, नटपदार्थस्याविनिर्णय-ताद-वस्थ्यात्। वाल्मीकिरामायणे तु वधूनाटकसंघैश्चेति नाटकपदस्यैवोपादानात्ततः प्राचीनमेव नाटकमूलमिति विनिर्णीतोऽयमंशः। तस्मान्नाट्यात्केवलादपि नाटकोत्पत्तिस्वीकारे न बाधकम्। गद्यप्रारम्भस्याश्वघोषादपि नितरां प्राची-नत्वं नास्तीति सिद्धान्तात्। महाभाष्यकारेण बलिबन्ध-कंसवधयोर्नाटकयो-रुल्लेखाच्च। अतो नाटकानामतिप्राचीनतानुरोधात्सम्भाषणाद्यसमवहितादपि नाट्यात्तदुत्पत्तिरित्यध्यवसेय"मित्यन्ये विमर्शकाग्रेसराः प्रतिवदन्ति। अत एव म्याग्डोनलादयः नाटकस्य मूलं किमिति प्रमाणानामनुपलम्भा-दनिर्णीत'मित्याहुः। तथाहि। द्वितीयपक्षेऽपि गद्यग्रन्थानामुत्पत्तिकालस्या-निर्णयाद्वादः शिथिलमूल एव। सम्भाषणासक्तस्य नाटकस्य मनोहारिता-भावान्नाटकताव्यपदेशानर्हत्वात्। न हि इदमस्य मूलस्वरूप'मित्यन्वेष्टुमुप-

क्रमस्य संबंधशून्यानामपि पदार्थान्तराणां मूलत्वेन सिद्धान्तनमुचितम्। अन्यथा नृत्तस्यैव नाटकमूलत्वस्य सुपपादत्वात्। तदाहुः—

गद्यमूलं पद्यमूलं नास्यमूलञ्च कीदृशम्।
विनिर्णयोऽत्र विषये न शक्योऽन्वेषकैः स्मृतः" इति।

इति 'संस्कृतनाटके' नाटकस्वरूपं नाम पूर्वार्धं समाप्तमभवत्।

---

## चक्षुषः प्राप्यकारित्वम्

(पूर्वानुवृत्तिः)

[ निबन्धकः—श्रीआशुतोषन्यायाचार्यः ]

ननु यद्यालोक एव सर्वाणि रूपाणि विद्यन्ते तर्हि एकस्य कस्यापि रूपस्य प्रत्यक्षं न स्यादपि तु सर्वेषां रूपाणां सहैव प्रत्यक्षं स्यात्, न स्याच्च पार्थिववस्तूनां तत्तद्रूपविशिष्टतया प्रत्यक्षम्, भवति च, अतः पार्थिवादिवस्तूनामपि तत्तद्रूपमवश्यं स्वीकार्यमिति चेन्न न, यतः आलोकस्य सर्वरूपवत्त्वेऽपि आलोको यदा पार्थिवादिवस्तुषु पतति तदा पार्थिवादिवस्तूनि स्वस्मिन् दृश्यमानं यद्रूपं तदतिरिक्तं सर्वमेव वर्णजातम् आलोकादाकृष्य स्वस्मिन विलाययति, आलोकश्च ततः परावर्त्तमानोऽनाकृष्टं यद्रूपं तेन विशिष्टश्चक्षुषि पतन पार्थिववस्तुनः प्रतिबिम्बरूपतां धत्ते, ततः पार्थिवतयालोकस्यैव रूपं दृश्यम्। प्रतिबिम्बोऽपि नालोकातिरिक्तः कश्चन पदार्थः किन्तु वस्तुजातपतितपरावर्त्तमानाकृष्टेतररूपः आलोक एव यदा दर्पणादौ पतति तदा तस्मिन्नालोके इतररूपाभावाद्दर्पणादिस्थ-गृहादिपतितपरावृत्तालोक एव गृहाद्याकारतया गृह्यते, तादृशालोक एव प्रतिबिम्ब इत्युच्यते। ( क्रमशः )

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

वन्ये स्निह्यति वन्यो नगरस्थानां न तन्मैत्री ।
तत्किं तद्विरहात्ते मनसो दुःखं समुद्भूतम् ॥६५॥
वेशं वहसि विशेषं यतिजनयोग्यं सुविश्वस्तम् ।
कृतिरिह का तव तादृग् येन रतिः स्यान्नवीनानाम् ॥६६॥
केवलवेशविमुग्धो न भवति नव्यो जनो दक्षः ।
लोकातिगकृतिदर्शी मुह्यति सोऽयं विना व्याजम् ॥६७॥
सुहृदां तव कृतिधारा धन्या यदिमे परप्राणान् ।
घ्नन्तो दुरितं घोरं जनयन्त्यन्ते महादुःखम् ॥६८॥
बन्धुस्तव निजदुःखं नेच्छति यद्वत्तथैवान्यः ।
तत् किं विशसति हतुं दुःखं जीवं स्वतो भिन्नम् ॥६९॥
यद्यपि पातकचिन्ता नान्तरमस्य स्पृशत्यस्मिन् ।
लोकविरोधिसमीहा तदपि न हेया कथं वास्ताम् ॥७०॥
यस्य हि यावत् क्रौर्यं भयमपि तावत्ततो लोके ।
तदिहोत्कर्षविशेषं सुहृदां नालं ह्यढोकतुं म् ॥७१॥
यद्युत्कर्षनिदानं भविनां वर्षातपक्लेशः ।
खगपशुपादपसङ्घः सकलानेतान् न किं जेता ॥७२॥
पश्यसि भविनः सर्वान्निर्मलबुद्ध्या श्रितोन्मादान् ।
लाघवगौरवयुक्तिस्तद्विपरीतं समाधत्ते ॥७३॥
प्राप्ते पित्तविकारे कामलरोगप्रतिच्छन्नः ।
पश्यति पीतमशेषं न ततः किञ्चिद् विपर्यस्तम् ॥७४॥
स्वसुकृतदुष्कृतयोगाद् विधिना विहिताः समे जीवाः ।
स्वविहितकर्मविभेदाद् भावविभेदो विधिप्रत्तः ॥७५॥
यदि विधिरिच्छति साम्यं किमिदं वाम्यं प्रपन्नोऽसौ ।
सृष्टिस्तस्य विचित्रा भवगतिभेदेऽभवत् सूत्रम् ॥७६॥
सिंहो भक्षककोटौ हरिणो भक्ष्यः कृतो धात्रा ।
एवं जीवनयात्रा भविनां भव्या चिरादास्ते ॥७७॥

तत्र न वाच्यः सिंहो हरिणः करुणापदं नो वा ।
सदृशं दैवनिदिष्टं लभते भोगं पराधीनः ॥७८॥
प्राक्तनकर्मविशेषाद् धनिको लब्ध्वा धनं भूयः ।
सुखमिह लभते यद् यद् न भवति तत्तद्विपर्यासः ॥७९॥
पूर्वं जन्मनि यूयं यं कृतवन्तो विधिव्रातम् ।
तदनुविधायिदशेयं दैन्यविपन्ना परिप्राप्ता ॥८०॥
कः पुनरत्र विपाके वाच्यः पुरुषस्त्वया लोके ।
दैवं पृच्छ निदानं यद्वशमाप्ता धरा सर्वा ॥८१॥
भृत्यः श्राम्यति घोरं प्रभुरुपभुङ्क्ते सुखारामम् ।
न विभोरयमपराधो यदरुणनेत्रं रुषा धत्से ॥८२॥
कथयसि वञ्चनचतुरां वाणिजजातिं समां लोके ।
साहसमिदमतिमात्रं स्वल्पविदस्ते मुधाबुद्धेः ॥८३॥
भाग्यात् सज्जनसङ्गं लभते यस्मात् पवित्रात्मा ।
तस्य वियोगादेषा मलिना बुद्धिस्तवायाता ॥८४॥
परिचर साधुचरित्रं वणिजं मित्रं यतः काले ।
दुर्गतिरेषा बुद्धेर्विलयं यायाद् गुणाधानात् ॥८५॥
परिजनपोषणकृत्यं धर्म्यं गदितं गृहस्थानाम् ।
कथमपि तत् परिषेव्यं मनुरित्येवं किलावादीत् ॥८६॥
कलुषं तत्र वदन्तो नितरां मूढा विपद्यन्ते ।
अविदितधर्मविधानैः किमिवानल्पं न वा जल्प्यम् ॥८७॥
विविधाशुचिपरिकीर्णोऽप्ययमभिमानी भवान् शौचे ।
क्रियया स्ववचनरोधं कुरुषे न त्वं किमेकान्तम् ॥८८॥
मलिना शिरसि जटाली वपुषि च धूली मुखे क्लेदः ।
एते स्वास्थ्यविघातं विदधति किंवा न ते नित्यम् ॥८९॥
रुद्धे रोमककूपे मलसङ्घातैः शरीरस्थे ।
रोगः प्रभवति भूयानसुपरिमोक्षमो देहे ॥९०॥

रोगानुदयं प्रेप्सुर्वपुषः पुष्टिं तथैवेच्छुः ।
मलमार्जनमिह देहे स्नेहैः प्रणयेत् क्रियादक्षः ॥९१॥

रोगनिकेतो देहः प्रतिपलमिह तन्निषेधार्थम् ।
कार्यो विविधो यत्नो विमुखस्तस्माद् विपन्नः स्यात् ॥९२॥

न स्वीकुरुषे कस्मान्निजमुन्मादं निराबाधम् ।
कृतिभिर्वचनैरपि ते दीव्यति सोऽयं मुहुः स्पष्टः ॥९३॥

काकं पिकमपि लोकः शब्दविशेषैरलं ज्ञातुम् ।
कृतिरपि नैव समाना प्रसरति काके पिके चान्या ॥९४॥

स्वार्थपरार्थविवादे वदसि परार्थं गरीयांसम् ।
किमिव स्मरसि विधानं स्वेन परार्थं कृतं पूर्वम् ॥९५॥

यवनो मलिनाचारः प्रदिशसि वर्णाश्रमं पूतम् ।
रक्षःसमनरभक्षो निन्दसि हिंसाविधिं श्रौतम् ॥९६॥

वचनं कृतिविपरीतं वदतां वाणी श्रुतेर्बाह्या ।
मूढाः प्रतिपदमेतैः स्वार्थपरैतैः प्रलम्भ्यन्ते ॥९७॥

स्वार्थं भ्राम्यसि भूमौ नैष्ठिकरूपं मृषा कुर्वन् ।
अत इह भवतो वाचः कृतिविपरीता न शोभन्ते ॥९८॥

तरणिं धनपरिपूर्णां सूचयसि त्वं मृषा किं वा ।
वल्लीपत्रवितानैः पूर्णामेनां प्रमन्येथाः ॥९९॥

धनमभि तन्मयतायाः फलमिदमधुना त्वया लब्धम् ।
विभ्रम एष धनानां भ्रमति यतस्ते मनोगेहे ॥१००॥

पश्यति कुक्कुरदष्टः कुक्कुरचिन्तासमुद्भूतान् ।
अभितः कुक्कुरसङ्घान् सलिले धरणौ तथान्यस्मिन् ॥१०१॥

पश्यति यदि धनपूर्णां तरणीं कामी भवानर्थं ।
तदयं शास्ति भवन्तं त्यजतु प्राप्तं वृथा कामम् ॥१०२॥

कामविघातादादौ वरमफलाशा परित्यक्ता ।
आशासाधनहेतोरधिकः क्लेशोऽन्यथा भावी ॥१०३॥

तद्यदि लतिकापत्रं कामयसे त्वं तरीलग्नम् ।
तत्तव कामः सफलो भविता तत्तत्परिप्राप्त्या ॥१०४॥

दिष्ट्या तमेवार्थमसौ तथास्ताम्
इत्येवमुक्त्वा परिनष्टरूपः ।
विस्माययामास समीक्षमाणान्
सर्वाननपूर्वक्रियया विमूढान् ॥१०५॥

इति महामहोपाध्याय-श्रीकालीपदतर्काचार्यकृते सत्यानुभावे महाकाव्ये
विरूपसत्यसंवादो नामैकविंशः सर्गः ॥२१॥

———

November, 1943 Reg. No. C. 1073



सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः

संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

भारते भातु भारती

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

November, 1943 | १८६५-शकीये कार्तिके | २६श-वर्षस्य ७म-संख्या | Vol. XXVI, No. 7

## वङ्गेषु दुर्भिक्षं

[ निबन्धकः—श्रीलक्ष्मीकान्तत्रिपाठी, एम, ए. ]

तीव्रौदर्यहुताशनप्रशमनस्वल्पाशया दूरतः
पल्लीरम्यनिकेतनं कथमपि त्यक्त्वा बुभुक्षाकुला ।
आयातीह सुतं शिशुं कुलवधूः कृत्वोरसि स्नेहतो
हा कष्टं नगरीं प्रति प्रतिपदं निन्दन्त्यदृष्टं निजम् ॥१॥

हा हा मानधना कुलीनललना दीनातिदीनाऽधुना
भक्तं भुक्तसमुज्झितं प्रतिपथं भ्रान्त्वाऽतिमत्तेव सा ।
संगृह्य क्षुधया मलीमसमहास्तूपात् परं यत्नतो
दत्त्वा पुत्रमुखे गिलत्यशरणा शिष्टं स्वयं का गतिः ॥२॥

गत्वा कुलं नीचजनस्य काचिद् भूदेवपत्नी विधवाऽन्नहीना ।
फेलामलं काङ्क्षति कातरोक्त्या बुभुक्षितः किं न करोति पापम् ॥३॥

भोज्येऽत्यल्पे विवादो भवति च वनिता-विश्व(श्व)कह्लोरदूरे
तत्रात्यन्तं निरस्तः कतिपयदिवसाभ्यन्तरे रे प्रकामम् ।
भोक्ताहं तेऽस्थिमांसं समधिकसुलभं वैरशुद्धिं करोमी-
तीव क्रोधाद्विजल्पन् मनसि स भषकोऽन्यत्र दुःखं प्रयाति ॥४॥

पूपं निषद्य पथि पर्युषितं सुतेभ्यः
स्तोकं विभज्य ददतीं जननीं विभाते ।
दूरादुपेत्य सहसाऽशनलुब्धबाला
किञ्चिन्ममापि विभजेति करोति काकुम् ॥५॥

क्वचित् कण्ठे मातुः कुसुममृदुलं बाहुयुगलं
निधाय क्षुज्ज्वालाविदलिततनू रोदिति शिशुः ।
परिष्वज्य प्रेम्णा ननु शमयितुं तं तु यतते
मुहुः साम्बा मोघं सजलनयना स्नेहवचनैः ॥६॥

क्वचिन्नग्नप्राया नरपतिपथे भाजनकरा
जनाः श्रेणीबद्धा रविखरकरैस्तापिततराः ।
स्थिता ध्यायन्तस्तामतिपरिमितां सत्रकृशरा-
महो धन्यस्तेन्न प्रचरति जगत्यद्य महिमा ॥७॥

पथिप्रान्ते काचिन्मलिनवसना धूलिशयने
शयाना विन्यस्य स्वतनुजमुखे चूचुकमहो ।
मृता माता मन्ये निखिलभवतापे व्यतिगते
गृहीत्वाद्य क्रोड़े तनयमतितृप्ता स्वपिति सा ॥८॥

श्वानो मनुष्यामिषलोलुपाः क्वचिन्मार्गे मुमूर्षून् परितश्चरन्ति ।
क्वचिच्च काकैः परिवेष्टितं मृतं खादन्ति नन्दन्ति च फेरुसङ्घाः ॥९॥

श्यामा शस्यचयैः समुज्ज्वलतनुर्या रत्नराजित्विषा
यद्भूतिर्ग्रहणात् पुनः पुनरहो विद्येव संवर्द्धते ।
मातुर्वङ्गभुवोऽङ्गने प्रतिदिनं तस्या म्रियन्ते शतं
भोज्याभाववशात् प्रजाः परवतामेतादृशी दुर्गति ॥१०॥

# बार्हस्पत्यसूत्रं रामायणं च

न. राजगोपालाचार्यः

Oriental Institute of Tirupati

## शकुनानि

| बार्हस्पत्य-सूत्रे. 4र्थः अध्यायः | रामायणे युद्धकाण्डे 10मः सर्गः |
| --- | --- |
| ब्राह्मे मुहूर्ते उत्थानम् (1) | ततः प्रत्यूषसि प्राप्ते प्राप्तधर्मार्थ-<br>चिन्तनः । |
| धर्ममर्थं च चिन्तयेत् (2) | राक्षसाधिपतेर्वेश्म भीमकर्मा<br>विभीषणः ॥ (1) |
| गजादिदर्शनं च (3) | मत्तमातङ्गनिश्वासैर्व्याकुली-<br>कृतमारुतम् ॥ (1a) |
| गजशब्द-मंगल-वेदपाठनं च- (5) | पुण्यान् पुण्याहघोषांश्च<br>वेदविद्भिरुदाहृतान् ।<br>श्रुश्राव सुमहातेजा भ्रातुर्विजय-<br>संश्रितान् ॥ (8) |
| शंखकाहलविषाणच्छिन्नवेणुवीणा-<br>तन्त्रीमृदङ्गपणवाः । (13)<br>तूर्यघोषाश्च (14) | शंखघोषमहाघोषतूर्यनादानु-<br>नादितम् ॥ (4) |
| दिव्यप्रमदादर्शनं च (15) | प्रमदाजनसंबाधं प्रजल्पित-<br>महापथम् ॥ (5a) |
| मागधभिन्नषड्जम् (16)<br>जातिस्वरं च (17) | गंधर्वाणामिवावासमालयं<br>मरुतामिव ॥ (6a) |
| मन्त्रतृप्तो वह्निः शतार्चिः विष्णुलिङ्ग-<br>धूमयुक्तो भवति (19) विष्णुलिङ्ग<br>for सस्फुलिङ्गः | सस्फुलिङ्गः सधूमार्चिः सधूम-<br>कलुषोदयः ।<br>मन्त्रसंधुक्षितोऽप्यग्निर्न सम्यगभि-<br>वर्धते ॥ (15) |

## अपशकुनानि

| | |
|---|---|
| तदशुभं गवां सन्दर्शनं च (20) | गवां पयांसि स्कन्नानि विमदा वीरकुञ्जराः । |
| गृध्रसंदर्शनं च (21) | गृध्राश्च परिलीयन्ते पुर्यामुपरि पीडिताः |
| संध्याज्वलनं च (22) विशुद्धशिवारुतं च (23) | उपपन्नाश्च सन्ध्ये द्वे व्याहरन्त्यशिवं शिवाः ॥ (20) |
| क्रव्याद-मृगाणां शब्दो ग्रामपुरद्वारे वा श्रूयते (24) | क्रव्यादानां मृगाणां च पुरद्वारेषु संघशः । श्रूयन्ते विपुला घोषाः सविस्फूर्जथु-निस्वनाः । (21) |

## मन्त्रणविधिः

| | |
|---|---|
| अवश्य-निरूपिणीयान्येतानि कार्याणि (25) | अवश्यं च मया वाच्यं यद् दृष्टमपि वा श्रुतम् ॥ (25) |
| वा. सू. 4th. अ. | रामायण युद्ध 6th सर्गः |
| मन्त्रमूलो हि विजयः (27) | मन्त्रमूलं हि विजयं प्राहुरार्या मनीषिणः । (5) |
| त्रिविधाः पुरुषाः उत्तमाधममध्यमाः (28) | त्रिविधाः पुरुषा लोके उत्तमाधम-मध्यमाः । |
| बन्धुभिर्बान्धवैर्हितैर्बहुश्रुतैर्धीरैः सह यत् कर्मारभते तदुत्तमम् (30) | मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्र-निर्णये । (7) |
| धर्मद्विविधेगुरौ भक्तिश्च (31) | मित्रैर्वापि समानार्थैर्बान्धवैरपि-वाहितैः ॥ |
| अर्थपरैस्सह मन्त्रयित्वा य आरभते तदुत्तमम् (32) | सहितो मन्त्रयित्वा यः कर्मारंभान् प्रवर्तयेत् ॥ (8) |
| | दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥ |

# चक्षुषः प्राप्यकारित्वम्

(पूर्वानुवृत्तिः)

[ निबन्धकः—श्रीआशुतोषन्यायाचार्यः ]

ननु तर्हि तद्रूपविशिष्टालोक एव गृह्यताम गृहाद्याकारस्तु कथं गृह्यत इति चेत ? आलोकस्य सन्निवेशविशेषेण तथा प्रत्ययोदयात ।

ननु पार्थिवादिवस्तुजातस्यालोकरूपग्राहकत्वे किं मानम ? प्रत्यक्षादीनामन्यथानुपपत्तिरेव, कथमिति चेत ? इत्थम्, प्राप्यकारीणि खल्विन्द्रियाणि, नहि चक्षुर्गतिमन्नापि विषयः, अथ च प्रत्यक्षं भवति तच्चेन्द्रियसन्निकर्षं विना नोपपद्यते अतस्तत्सन्निकृष्टालोकद्वारेण प्रत्यक्षोपपत्तिः कल्पनीया, सापि सर्वविधरूपवदालोकसन्निकर्षेण नोपपद्यतेऽतस्तत्तद्रूपविशिष्टालोकेनैव सोपपादनीया, आलोकस्य तत्तद्रूपवत्तापीतररूपग्रहणेन विना नोपपद्यतेऽतः पृथिव्यां तत्तद्रूपग्रहणसामर्थ्यमङ्गीकार्यम् । ननु तादृशसामर्थ्यसत्त्वे पृथिव्या सर्वरूपमेव गृह्यताम ? न, यस्य तद्रूपग्रहणसामर्थ्यं तत्तद्रूपमेव गृह्णाति न सर्वं सर्वरूपम्, यथाऽयस्कान्तो लौहमेव गृह्णाति न तु ताम्रम् । तत्तद्रूपग्रहणसामर्थ्यञ्चेतररूपाणामप्रत्यक्षतया कल्प्यते इत्युक्तम्, तत्रापि शुक्लतया दृश्यमानपदार्थस्य रूपग्राहकत्वमेव नास्ति अतस्तस्मात परावर्त्तमान आलोकः समानसकलवर्णकचित्रितघूर्ण्यचक्रवच्छुक्ल एव प्रतिपद्यते, कृष्णतया दृश्यमानपदार्थस्य सर्वरूपग्राहकत्वमतस्ततः परावर्त्तमानालोके कस्यापि रूपस्याभावादसौ नीरूपान्धकार इव कृष्णा एव गृह्यते, अतः शुक्लं कृष्णञ्चातिरिक्तं रूपं नास्त्येव, रूपसमष्टिरेव शुक्लो रूपसामान्याभाव एव कृष्ण इति ।

नन्वालोकस्य सर्वरूपवत्त्वे एव किं मानम् ? नहि तत्र शुक्लेतरात्कश्चन रूपमुपलभ्यत इति चेत ? न, प्रत्यक्षत एवाऽऽलोके सर्वरूपोपलम्भात्,

कथमिति चेत् त्रिकोणकाचेन उन्मध्यकाचेन चाऽऽलोकप्रत्यक्षकाले तत्प्रत्यक्षोदयात्, नहि तत्र काचस्य तानि रूपाणि, नापि काचस्येदृशो महिमा येनासदपि तत्तद्रूपं प्रकाशयति, अतस्तत्र दृश्यमानरूपजातस्याधिकरणान्तरासम्भवादालोक एव तदधिकरणम्। तथेन्द्रधनुषि मुखप्रक्षिप्यमाणजलपतितसूर्यालोके च प्रत्यक्षत एव सर्वरूपोपलम्भात्। एवं सूर्यालोकत उन्मध्यकाचेन रूपविभागस्य प्रत्यक्षोदयेन स एव सर्वरूपाधिकरणम् !

अतएव प्रातःसायंकालयोः सूर्यस्य रक्ततया दर्शनमप्युपपद्यते। सूर्यस्य तत्प्रकाशस्य वा स्वतः शुक्लत्वे तन्न स्यात्, रक्तरूपस्य तत्राभावात्, अस्मन्मते च सूर्यतः क्रमेण तत्तद्रूपविशिष्टाः किरणा आगच्छन्ति, यादृशवर्णविशिष्टा यदीयकिरणाश्चक्षुषि पतन्ति तादृशरूपवदेव तद्वस्तु गृह्यते तथा च सूर्यतः प्रातः रक्तकिरणाः प्रथममागच्छन्ति, अतस्तदा सूर्यो रक्तो दृश्यते, ततः क्रमेण अन्यान्यकिरणा अपि विभिन्नरूपवन्त आगच्छन्ति, तेन सूर्यः क्रमेण विभिन्नरूपविशिष्टतया दृश्यते, एवंरीत्या यदा सर्वविधाः किरणा आगच्छन्ति तदा सूर्यः शुक्लतया दृश्यते, एवं मध्याह्नात्परतः सूर्यस्य किरणा एकैकक्रमेण ह्रसन्ति, तेषां च क्रमेण ह्रासे सूर्यस्य वर्णव्यत्ययोऽपि वृद्धिविपरीतक्रमेण दृश्यते, अन्ततः सायं रक्तकिरणागमात् सूर्यो रक्तो दृश्यते, सूर्यस्य तदालोकस्य वा स्वाभाविकैकरूपवत्त्वे क्रमेण विभिन्नरूपवत्तया दर्शनं नोपपद्यते अत आलोक एव सर्वरूपाधिकरणम्।

एते च किरणा नार्णविका अपि तु शक्तिविशेषा अतिरिक्ता एव, ते च गतिमदाकाश ( ईथर ) तरङ्गसम्पर्केण गतिमन्तो भवन्ति, चक्षुषि चेन्मध्यकाच इवोन्मध्यः स्वच्छश्चर्मविशेषो दृश्यमाय उपरिभागे विद्यते तन्मध्यत आलोको गच्छन्नुन्मध्यकाचविनिर्गतालोक इव चक्षुःपिण्डपश्चादवस्थितप्रतिसीरायां ( रेटिनानामिकायां ) स्वच्छचक्षुर्गोलकमार्गेण पतन् यस्मादाधारादालोक आगच्छति तदाधाराकाराकारितो विपरीतप्रतिबिम्बरूपतां धत्ते तेनैवास्माकं प्रत्यक्षम्भवतीत्येवं समादधते ॥

अत्रेदमालोचनीयम्, किमालोकस्यैव सर्वरूपमुत पृथिव्या अपि किञ्चन स्वतन्त्रं रूपमस्ति, यदि तावत्पृथिव्याः स्वीयं किमपि रूपं नास्ति आलोकरूपेणैव तस्याः प्रत्यक्षं भवति, आलोकाच्च दृश्यमानेतररूपं पृथिवी समाकर्षति, तदा कुड्यादिषून्मध्यकाचेन पाश्चात्त्यवस्तूनां प्रतिबिम्बो न गृह्येत यतस्तदन्तर्विनिर्गतालोकात् कुड्यादिना स्वस्मिन दृश्यमानेतरेषां रूपाणां समाकर्षणात् कुड्यादिरूपमेव विलोक्येत नतु काचपाश्चात्त्यवृक्षादिरूपम्, दृश्यते च तदतस्तथा तादृशसामर्थ्यस्य पृथिव्यां सत्त्वे पार्थिववस्तुन उपरि उन्मध्यकाचेन आलोकरूपाणां विभागो न दृश्येत, दृश्यते चातश्च न पृथिव्यास्तादृशरूपकर्षणशक्तिरस्तीति स्वीकार्यम् ।

ननु नैर्मल्यं चाकचिक्यं वा रूपग्रहणे प्रतिबन्धकम, अत एव दर्पणादौ यथावद् वस्तुस्वरूपं दृश्यते कुड्यादौ च किञ्चिच्चाकचिक्यसत्त्वेन कुड्यादिकं सर्वरूपं न ग्रहीतुमलम्, अपि तु स्वल्पं गृह्णात्यतस्तत्र प्रतिबिम्बो गृह्यमाणोऽपि स्पष्टतां नाधत्ते, कज्जलादौ च प्रतिबिम्बो न दृश्यते तत्र स्वल्पस्यापि चाकचिक्यस्य विरहात्, तथा पार्थिवादिपदार्थेषु परिमितरूपग्रहणसामर्थ्यमस्ति नतु अधिकरूपग्रहणसामर्थ्यम् यत एतावदेवं रूपं गृह्णाति यथा जलपात्रस्य स्वगतावकाशपरिमितजलग्रहणसामर्थ्यम् अधिकजलप्रक्षेपे तु यथा जलं स्थानमनासाद्य परावर्तते तथैव कुड्यादिषु उन्मध्यकाचेन विनिर्गतालोक आधिक्येन पतन् तत्राधिकरूपग्रहणसामर्थ्याभावात् स्थानमनासादयन् स्वीयरूपं सनाथीकृत्यैव कुड्यादिभ्यः परावर्तते तेनैव तत्र पाश्चात्त्यवस्तुप्रतिबिम्बो दृश्यत इति चेत् ? न, यतस्त्वन्मते सूर्यकिरणा यदा बहिः कुड्यादिष्वन्येनाप्रतिहता अधिकतराः पतन्ति तदा तेभ्यः कुड्यादयः स्वस्मिन् दृश्यमानेतरसकलरूपमेव गृह्णन्ति अन्यथा तदा तेषां तत्तद्रूपवत्तया प्रत्यक्षं न स्यादतोऽधिकालोकतोऽप्यधिकरूपग्रहणसामर्थ्यमङ्गीकार्यम्, एवञ्च सति यदा त्वन्येन प्रतिहतास्त एवाऽलोका गृहमध्यकुड्यादिषून्मध्यकाचमार्गेण पतन्ति तदा ते बहिःकुड्यादिपतितालोकतो नाधिका अपि त्वत्यन्तं न्यूनास्तदैव तु तत्र प्रतिबिम्बो दृश्यते तदा

तदालोकतस्ते कुड्यादयस्तदालोकाधिक्येन तदीयरूपं न गृह्णन्तीति वार्त्ता निपीतकालकूटस्याहिखेलनासामर्थ्यकथनमनुकरोति ।

( क्रमशः )

---

## सम्राट् चन्द्रगुप्तः

[ निबन्धकः—वि० कृष्णस्वाम्ययङ्गार्यः ]

भारतदेशस्य प्राचीनमितिहासमामूलाग्रं परिशोध्य यथा कथञ्चिदस्माकमपकर्षमेव प्रतिपिपादयिषूणां पाश्चात्त्यग्रन्थकाराणामनृतलेखनानि प्रत्याख्याय भारतीयानां वीराणामद्भुतं स्फूर्तिदायकं चरितमुपनिबबन्ध जयशङ्करप्रसादनामा हिन्दीभाषाकविः। राजकीयमधिकारमात्मसात्कृतवन्तः पाश्चात्त्या भारतीयानां मूलपुरुषेषु दोषारोपणेन स्वेषामुत्कर्षं समर्थयितुकामाः कुमार्गमवलम्ब्य मिथ्यावादानादद्रिरे। विचारदरिद्राश्चाधुनिकास्तेषामसत्यवचनेषु दृढविश्वासाः प्राचीनानैतिहासिकान्महापुरुषानपि केवलं दोषाणामाकरानवगच्छन्ति। एवमेव मौर्यसार्वभौमस्य चन्द्रगुप्तस्यापि नीचजातिसम्भवतां प्रचार्य तस्मिंस्तिरस्कारबुद्धिमापादयन्ति वैदेशिकाश्चरित्रकाराः, येषामुक्तौ प्रमाणानुपलम्भादसूयामूलकतां सम्भावयामः।

चन्द्रगुप्तस्य माता मुरा नाम काचिन्महानन्दस्योपपत्नी शूद्रकुलोत्पन्ना रमणीति प्राचां प्रवादः। एतामेव प्रतीतिमनुसृत्य तद्वंशसम्भवा मौर्या इति व्यपदेशमलभन्तेति विद्वांसस्समर्थयन्ते। परन्तु ग्रीकलेखकानां निराधारेण मिथ्याभाषणेन भ्रमोऽयं सार्वत्रिकः प्रससारेति विस्मयमावहन्ती वार्तैषा। महानन्दस्य स्कन्द्रमीसाख्यस्य (Xandramese) नीचजाति-

सम्पर्काल्लोकापवादपात्रतां ग्रीकैः पराजितः पञ्चनदप्रान्ताधिपतिः पुरूरवा जिज्ञासापरवशाऽऽयालक्सान्द्राय न्यवेदयत । पार्श्ववर्तिनश्च केचिच्चन्द्रगुप्तस्यैव नामान्तरमेतदिति सम्भाव्य कल्पनाशक्तिमुपयुज्य कथामसूत्रयन— 'शूद्रायां गृहीतजन्मा चन्द्रगुप्तो निकृष्टवर्णो लोकनिन्दाया विषयस्संवृत्तः' इति । चन्द्रगुप्तो हि चाणक्यस्य साहाय्येन सेनां संघटय्य स्वदेशं प्रतिनिवर्तमानस्यालक्षेन्द्र (Alexander)स्य पराजयमुपादधाविति तस्मै भृशमसूयया ग्रीकाश्चरित्राचार्यास्तस्य विमलकीर्तौ कलङ्कमध्यारोपयामासुः । चाणक्योऽपि क्षत्रियोचितां वृत्तिमाश्रित्य शत्रून्पराजितवतोऽपि तस्य वर्णाश्रमधर्मपालने श्रद्धाभङ्गमुपनिशाम्य कुपितचेता देशस्य विपत्तिं परिजिहीर्षुस्साहाय्यमनुष्ठाय ततस्तं परितत्याज । आर्यसाम्राज्यस्य प्रतिष्ठापनेन विदेशीयानामाक्रमणं विफलयितुमेव चाणक्यः प्रायतत । सफलपरिश्रमश्च ग्रीकसैनिकान्प्रधाव्य दृढप्रतिष्ठे सम्राजि चन्द्रगुप्ते राक्षसमंत्रिणमावर्ज्य कृतार्थो बौद्धमतपक्षपातेन दूषिताशयं राजानमनुवर्तितुमनभिलष्यन वानप्रस्थपदवीमाशिश्राय । चाणक्यस्य बुद्धमतविद्वेषाच्चन्द्रगुप्तस्य सनातनधर्मे गलितविस्रम्भस्य नवीनमार्गेऽभिनिवेशाच्च तयोरैकमत्यमपि राजकीयोद्देशसाधनार्थमुपकल्पितं तात्कालिकमेव पर्यणंसीत । अत एव धार्मिकक्रियालोपाच्चन्द्रगुप्तं वृषलपदेन सम्बोधयामास चाणक्यः । एतेन चाणक्यस्य निःस्पृहतया सम्राजमपि तृणाय मन्यमानस्य वचनानि सभक्तिश्रद्धमाशृण्वता चन्द्रगुप्तेन साकं मतभेदो न सयुक्तिक इति प्रत्यवस्थानं निरस्तप्रायम् । धार्मिकभावनासु परस्परविरोधेऽपि स्वातन्त्र्यपरिरक्षणाय सहकारस्याभ्युपगमे बाधकाभावात । तक्षशिलायामर्थशास्त्रमध्यापयता चाणक्येन गान्धारदेशाधिपतेराम्भीकस्य देशद्रोहिणो भयग्रस्तस्य नीचतामवलोक्य व्यथितान्तरङ्गेण देशरक्षार्थमेव समर्थस्य क्षत्रियवंशजातस्य सेनापतेरन्वेषणमारभ्य चन्द्रगुप्तस्य साहाय्यमनुष्ठातुं स्वयमेव प्रवर्तनात । एवञ्च चाणक्यकृतेन वृषलेति सम्बोधनेन चन्द्रगुप्तस्य जन्मना निकर्षं न कश्चिदुपपादयितुं शक्नोति ।

मौर्यपदमपि मुराशब्दान्न व्युत्पादयितुं प्रभवामः। अपत्यार्थे स्त्रीभ्यो ठकि मौरेय इत्येव रूपमुचितम्, न तु मौर्य इति। भगवतो गौतमबुद्धस्य महानिर्वाणं क्रिस्तात्पूर्वं षष्ठे शतके समभवदिति विमर्शकानामैकमत्येन निष्कर्षः। पिप्पलीकाननस्थैर्मौर्यैर्गौतमबुद्धस्य पृष्ठस्थितमस्थिशकलं यूपस्तम्भनिर्माणाय नीतमिति बौद्धग्रन्थानामध्ययनेन ज्ञायते। एतेन क्रि. पू. षष्ठशतक एव मौर्यान्ववायस्य सत्तालाभस्सिध्यति। तत्कथमिव क्रि, पू. चतुर्थशतकस्थिता मुरादेवी मौर्यवंशस्य मूलपुरुषं जनयिष्यतीति विचारार्हमेतत्। तस्माच्चन्द्रगुप्तस्य शूद्रायामुत्पत्तिर्दुर्मतीनां कुकल्पनायामायतते, न तु जातुचिदपि वस्तुस्थिताविति नात्र विवादावकाशः। चाणक्यचन्द्रगुप्तयोरविरुद्धमतयोरपि धर्मविचारे भूयांसमभिप्रायभेदमालक्ष्य नैतावता तयोस्सहकारे शङ्कोत्थापनं युज्यते। राजकीयविषयाणामतिजटिलतया तत्रापातप्रतीयमानस्यापि सौहार्दस्य वास्तविकविरोधे वैपरीत्यमुपस्थापयितुमशक्तेः। एते च विचित्रा विषया जयशङ्करप्रसादेन स्वयं विरचितस्य चन्द्रगुप्तनाटकस्य भूमिकायां सविस्तरमुपन्यस्तास्तत्रैव द्रष्टव्या इत्यलम्।

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)

श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road,

Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,

9, Panchanan Ghose Lane, Calcutta.

## द्वाविंशसर्गः

अन्तर्हिते तत्र मृषावधूते
सविस्मया वाणिजभृत्यसङ्घाः ।
समन्ततो नेत्रमभिक्षिपन्तो
गवेषणामस्य तदा प्रचक्रुः ॥१॥

कश्चित् स्वनेत्रं सहसा सदोषं
मत्वा करेणामृशति स्म भूयः ।
कश्चित् स्वनेत्रस्य यथार्थ-दृष्टिं
वस्त्वन्तरेणैव परीक्षते स्म ॥२॥

सन्दिह्य कश्चिद् विहितेन्द्रजालं
तं हस्तमर्शेन समन्वियेष ।
कश्चिच्च भूतं तमवेत्य भीतः
शिश्लेष गाढं परमर्द्धदर्शी ॥३॥

अव्यक्तशब्देन भयोचितेन
व्यूहे निमग्नः किल कोऽपि भीतः ।
स्थिरान्तरः कश्चन तत्र तांस्तान
असान्त्वयच्छान्तिमयैर्वचोभिः ॥४॥

बिभेषि किं स्थैर्यमुपेहि चित्ते
मत्तः किलासौ न हि भूतयोनिः ।
वक्तुं न रामेति वचः स ईष्टे
श्रोतुञ्च यत स्वेन जगाद पूर्वम् ॥५॥

नाप्येष सुरातंपसन्निधानं
सोढुं क्षमः कौशिकवत कदाचित ।
अयं पुनर्दीप्त-रविप्रतापे
मध्यन्दिने दृष्टिपथेऽवतीर्णः ॥६॥

सुविस्मितो लक्षपतिस्तदानीं
जामातरं शङ्खपतिं बभाषे ।
वत्साभिजानामि न तथ्यमस्मिन
क एष किं वा स विधातुकामः ॥७॥

आदौ स उन्मत्त इव प्रवृत्त-
स्ततः परं प्राह सदर्थवाचम् ।
असूत वाचा बहुविभ्रमं नः
सम्प्रत्यसौ क्वापि गतो विनाशम् ॥८॥

अन्विष्यतामेष वनावृतायाम्
उपत्यकायामिह दक्षभृत्यैः ।
स यावदात्मीयगणैः समेतो
मा नाम नः सम्पदमद्य रुन्ध्यात ॥९॥

उवाद यादृक् स्वजनान स पूर्वं
तेनास्य शीलं न हि पूतमीक्षे ।
तदाशु शस्त्रैः सहिता जना मे
स्वरक्षणार्थं दधतां प्रयत्नम् ॥१०॥

मायाधराः केचन दस्युवर्गाः
प्रपश्यतां दृष्टिरुजं सृजन्तः ।
हरन्ति वित्तानि यथाभिलाषं
तत्रावधेयं सुतरां सुदक्षैः ॥११॥

भिक्षुर्गृहस्थाश्रमसन्निधाने
कामी परिभ्राम्यति भैक्ष्यहेतोः ।
इतो विदूरेऽपि न लोकवासः
कथं नु भिक्षोरिह सन्निधिः स्यात ॥१२॥

नानादिशा संशयितेषु तेषु
सम्भ्रान्त-भावा जगदुस्तरीस्थाः ।

December, 1943 Reg. No. 1073



सम्पादकः—
महामहोपाध्याया-
नन्तकृष्णशास्त्री
सहकारिसम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः

भारते मातु भारती

संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

December, 1943 | १८६५-शकीये अग्रहायणे | २६श-वर्षस्य ८म-संख्या | Vol. XXVI, No. 8

## सभापर्व

अस्मिन मासि हिन्दुमहासभा, प्राच्यविद्यासंमेलनम्, तदङ्गं शास्त्रार्थ-विचारसभा देवभाषापरिषच्चान्तेऽमृतसरःकाश्ययोध्यानुक्रमेण भवन्तीति सन्तोषस्थानमिदम्। सर्वाश्चेमा हिन्दूनामेवोन्नतिमार्गान् तत्तत्क्षेत्रेषु व्यवस्थापयितुमिच्छन्ति। तत्र हिन्दुमहासभायां हिन्दूनां कृते राजनीतिक्षेत्रे कर्तव्यमेव निर्दिधारयिषितम्, यतोऽवान्तरसमाजानां सर्वेषां तदङ्गानां नान्यत्रैकमत्यं भवति। सांप्रतं हिन्दुमहासभा हिन्दूनां वृद्धिमेव काङ्क्षति, न तु सनातनधर्मिणां धर्मविशेषप्रचारस्य वा। अतोऽवान्तरसमाजानां

स्वसिद्धान्तप्रचारे संपूर्णं स्वातन्त्र्यम्, मन्यते, हिन्दुमहासभा नापहर्तुमिच्छतीति। अतो विश्वस्यते सर्वैरपि राजनीतिक्षेत्रे स्वबलं प्राप्तुं तया सहयोगोऽवश्यमेव दीयेतेति।

प्राच्यविद्यासंमेलनं वहोः कालात् पाश्चात्त्यसरण्या प्राच्यविद्याचर्चाया एव स्थानमासीत्, न तु प्राच्यसरण्याऽपि। संप्रति तु "ब्राह्मणमहासंमेलनमद्रप्रान्तविद्वत्परिषदादिसमादृतां विचारप्रणालीमेवावलम्बत इति तदीयनियमावलीदर्शनेन विज्ञायते, इति प्राच्यविद्यासंमेलनं सांप्रतं यथार्थमेवोपलक्ष्यते। अत एतदर्थं संस्कृतसाहित्यपरिषद् हृदयेन सन्तुष्यति।

देवभाषापरिषदपि चतुर्दशवयस्का कथञ्चनेदानीं यौवनपथमागच्छति। कार्यप्रणाली तु तस्या यथासमयं सम्यग्विचारयिष्यते। संस्कृतभाषाप्रचारोऽस्याः प्रधानं लक्ष्यं खण्डखाद्यमेव सर्वेषाम्, न केवलं मनुष्याणां किन्तु देवानामपि। तत्र सभापत्यभिभाषणमत्रैव प्रकाशयते सांप्रतम्। अपराण्यपि हिन्दुमहासभादिभाषणानि यथासमयमालोच्येरन। सांप्रतं त्वेतावदेव। अनन्तरे मासि महामहोपाध्यायपण्डितप्रवराणां श्रीहाराणचन्द्रशास्त्रि-चरणानामकस्मादेव परलोकं प्राप्तानां स्मृतिचिह्नतया "श्रीहाराणचन्द्रसङ्ख्ये"ति नाम्ना पत्रिका निर्गमिष्यति। एत एव हि देवभाषापरिषदो बीजमारोपयन्निति विशेषस्तु न कथमप्यत्रावसरे स्मृतिपथमतिक्रमितुं शक्नोतीति तु वस्तुस्थितिः।

———

# बार्हस्पत्यसूत्रं रामायणं च

( पूर्वानुवृत्तिः )

न. राजगोपालाचार्यः

Oriental Institute of Tirupati

एकोऽर्थं विमृशेदेको धर्मे प्रकुरुते
मनः ।
एकः कार्याणि कुरुते तमाहुर्मध्यमं
नरम् ॥ (10)

गुणदोषागमेऽनिश्चित्यमौर्ख्यबाहु-
ल्याद् य आरभते सोऽधमः ।

गुणदोषावनिश्चित्य त्यक्त्वा दैव-
व्यपाश्रयम् । (10)
करिष्यामीति यः कार्यं उपेक्षयः स
नराधमः ॥
यथेमे पुरुषा नित्यमुत्तमाधम-
मध्यमाः । (11)
एवं मन्त्रेऽपि विज्ञेयायुत्तमाधम-
मध्यमाः ॥

ऐकमत्येन दण्डनीतिनेत्रेण धीरैर्म-
न्त्रिभिर्यो मन्त्रः, स उत्तमः

ऐकमत्यमुपागम्य शास्त्रदृष्टेन
चक्षुषा ।
मन्त्रिणो यत्रनिरतास्तमाहुर्मन्त्र-
मुत्तमम् ॥

पूर्वं बहुबुद्धयः पश्चादेकमतयो भवन्ति
यत्र, स मध्यमः

बह्वयोऽपि मतयो भूत्वा मन्त्रिणा-
मर्थनिर्णये ।
पुनर्यत्रैकतां प्राप्ताः स मन्त्रो
मध्यमः स्मृतः ॥

यत्र कलहो भर्त्सनं च, एकस्य धर्मे
एकस्य अर्थे एकस्य क्रोधे यस्मिन्,
सोऽधमः

अन्योन्यां मतिमास्थाय यत्र
संप्रतिभाष्यते ।
नचैकमत्ये श्रेयोऽस्ति मन्त्रः
सोऽधम उच्यते ॥

| | |
|---|---|
| पूर्वं स्वामिना कार्यनिवेदनम् | कार्यं संप्रतिपद्यन्तामेतत्कृत्यं मतं मम । |
| [1]"यत्पुनः यथाक्रममेकैकस्य मतं श्रोतव्यम् 40 | इत्युक्त्वा राक्षसेन्द्रेण राक्षसास्ते महाबलाः । |
| क्वामितं प्रसाद्य कार्यं कल्पयितव्यं 41 | ऊचुः प्राञ्जलयस्सर्वे रावणं राक्षसेश्वरम् । (1) |
| पूर्वं स्वामिगुणं संकीर्त्य स्वामिदोषं परदोषं च | युद्धकाण्डे 7 to 9 सर्गे 8 श्लोक पर्यन्तम् । |
| [2]मन्त्रयित्वा पुनः स्वामिगुणसंस्थापनं कुर्यात्" | स्वस्वाभिप्रायाविष्करणम् |
| [3]प्रमत्तेष्वभियुक्तेषु दैवोपहतेषु च (न?) सिद्ध्यन्ति पराक्रमाः (44) | प्रमत्तेष्वभियुक्तेषु दैवेन प्रहतेषु च विक्रमास्तात सिद्ध्यन्ति परीक्ष्य विधिना कृताः (9) |
| [4]अप्रमत्तं धर्मज्ञं जितेन्द्रियं विजिगीषुं बलिषु जातकोपं दुराधर्षं प्रति विक्रमो न कार्यः (45) | अप्रमत्तं कथं तं तु विजिगीषुं बले स्थितम् । जितरोषं दुराधर्षं प्रधर्षयितुमिच्छथ (10) |

---

1 In chapter 4, Bārhaspatya Arthaśāstra, from 40 to 43 sūtras. In Rāmāyaṇa 7 and 8 sargas (in Yuddhakāṇḍa) the respective qualities of the ministers in the council are described.

2 अर्थानुवादपराणि इमानि वाक्यानि ।

3 In chapter 4, sūtras 44 to 47. Vibhīṣaṇa urges that all the valour of Ministers is of thorough failure before Rāma. This is described in the 9th Sarga in Rāmāyaṇa Yuddhakāṇḍa.

Omit—न. See Rāmāyaṇa If we use न in this sūtra the meaning of the next sūtra differs.

4 In chapter 2, sūtras 51 to 57 describe Vibhīṣaṇa's argument about the disqualification of Indrajit to be a member of the mantra-sabhā as in sarga 15.

| | |
|---|---|
| नीतिवियुक्तः पुत्र इव शत्रुः । | पुत्रप्रवादेन तु रावणस्य त्वमिन्द्र-जिन्मित्रमुखोऽसि शत्रुः (10) |
| बालं दुष्टं साहसिकं अज्ञातशास्त्रमन्त्रे (न) प्रवेशयेत् (51) | बालं दृढं साहसिकं च योऽद्य प्रावेश-यन्मन्त्रकृतां समीपम् (11) |
| | न तात मन्त्रे तव निश्चयोऽस्ति बाल-स्त्वमद्याप्यविपक्वबुद्धिः (9) |
| मूढा दुराचाराः तीक्ष्णा अल्पबुद्धयः क्षिप्रक्रुद्धा बाला मन्त्रयोग्या न (52) | मूढः प्रगल्भोऽविनयोपपन्नः तीक्ष्ण-स्वभावोऽल्पमतिर्दुरात्मा । |
| | मूर्खस्त्वमत्यन्तसुदुर्मतिश्च त्वमिन्द्र-जिद्बालतया ब्रवीषि (12) |
| सर्वरत्नान्यपि दीयन्तां स्वकार्य-जीव-यशोरक्षणे[1] (53) | धनानि रत्नानि विभूषणानि वासांसि दिव्यानि मणींश्च चित्तान् ॥ |

॥ **राज्ञां विश्वासयोग्यायोग्यनिर्णयः** ॥

| | |
|---|---|
| ज्ञातीनां ज्ञातयो व्यसने हृष्यन्ति (10) | जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस । |
| मनसोऽभिप्रायं वाचः प्रीतिकर्म च (9) | हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयस्सदा (3) |
| ज्ञातिं ज्ञातयः प्रच्छन्नहृदयाः क्रूरा उपद्रवन्ति (10) | नित्यमन्योन्यसंहृष्टा व्यसनेष्वातता-यिनः । |
| | प्रच्छन्नहृदयाः क्रूरा ज्ञातयस्तु भयावहाः (5) |

1 In chapter 5, sūtras 7 to 14, Vibhīṣaṇa advising Rāvaṇa to return Sītā and Rāvaṇa in turn advising and disgracing Vibhīṣaṇa is described as in sarga 16. (Rāmāyaṇa Yuddhakāṇḍa).

| | |
|---|---|
| सर्वभयेषु ज्ञातिभयं घोरम् (12) | नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः (7)<br>घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः ।<br>कृत्स्नाद्भयात् ज्ञातिभयं सुकष्टं विदितं च नः (8) |
| गोषु पयः ब्राह्मणे कोपश्च (13)<br>स्त्रीषु चापलं दूरत्वं ज्ञातिषु सौहृदं पद्मपत्रकश्च बिन्दुवत्[1] (14) | विद्यते गोषु संपन्नं विद्यते ब्राह्मणे तपः ।<br>विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् (9)<br>यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः ।<br>न श्लेषमधिगच्छन्ति तथाऽनार्येषु सौहृदम् (11) |
| हितं गुरुजनवाक्यं शास्त्रचोदितं च ये न शृण्वन्ति कालचोदिताः तस्मात्तान् परिहृत्य अन्यत्र वसेत् (15)<br>लोकविरुद्धं नाचरेत्[2] (16) | सुनीतं हितकामेन वाक्यमुक्तं दशानन ।<br>न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः (19)<br>सुग्रीवः<br>प्रकृत्या राक्षसेन्द्रस्य भ्राता मित्रस्य ते प्रभो । |

1 In chapter 5, sūtras 15-16, Vibhīṣaṇa after leaving Rāvaṇa coming to Rāma and seeking his help is described as in sarga 16 (Yuddhakāṇḍa).

2 In chapter 5, sūtras 19 to 23, the argument of ministers (Sugrīva, Aṅgada, Sarala, Hanuman and others) in Rāmasabha whether Vibhīṣaṇa can be taken as a friend is described as in sargas 17 & 18 (Yuddhakāṇḍa).

| | |
|---|---|
| शत्रुपक्षादागतं न विश्वसेत् (19) | आगतश्च रिपोः पक्षात् कथमस्मिन् हि विश्वसेत् (23) |
| गुणतः संगृह्णीयात् (20) | अंगदः<br>गुणतः संग्रहं कुर्याद् दोषतस्तु विसर्जयेत् (39)<br>यदि दोषो महांस्तस्मिन् त्यज्यतामविशंकितम् ।<br>गुणान् वाापि बहून् ज्ञात्वा संग्रहः क्रियतां नृप (40) |
| भावैः परीक्षयेत् (21) | मैन्दशरभौ<br>परीक्ष्य च ततः कार्यो यथान्याय्यं परिग्रहः (42)<br>भावमस्य तु विज्ञाय तत्त्वतस्त्वं करिष्यसि । |
| वीरणसारैः सहसा नप्रज्ञायते (?) बुद्धिमविज्ञाते सहसा परीक्षयेत् (22) | हनुमान्<br>पृच्छ्यमानो विशङ्केत सहसा बुद्धिमान् वचः ।<br>तत्रमितंप्रदुष्येत मिथ्यादृष्टं सुखागतम् (58)<br>अशक्यस्सहसा राजन् भावो वेत्तुं परस्य वै (59) |
| इङ्गितैर्ज्ञातुं शक्यते (23) | अन्तःस्वभावैर्गीतैस्तैर्नै पुण्यं पश्यता भृशम् ।<br>न त्वस्य ब्रुवतो जातु लक्ष्यते दुष्टभावता ॥ |
| प्रसन्नः | प्रसन्नं वदनं चापि तस्मान्मे नास्ति संशयः (60) |

अशङ्कितमतिः स्वस्थः (25)

अशंकितमतिस्वस्थो न शक्यः परिसर्पति ।

अकोपनश्च, बलादयोऽपि विन्नृणवन्ति तम् अकोपनश्च (26)

न चास्य दुष्टा वाक्चापि तस्मान्नास्तीह संशयः (6)
बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ।

स्वकुलस्य विनाशं ज्ञात्वा बुद्धिमान् तत्र शत्रुपक्षमपि न युक्तमाश्रयितुम् (27)

उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणम् ।
वालिनश्च वधं श्रुत्वा सुग्रीवं चाभिषेचितम् (64)
सख्यं प्रार्थयमानश्च बुद्धिपूर्वमिहागतः ।
यथाशक्ति मयोक्तं तु राक्षसस्यार्जवं प्रति (66)

हृदये यथावच्छुभाशुभं पूर्वमुदेति न दुष्टाचारः सर्वत्र कारयेत[1]

देशकालयोग्यं कर्म नयानयौ च वेदयेत्

उपप्रदानं सान्त्वं च भेदं काले॰च विक्रमम् ।
योगं च रक्षसां श्रेष्ठ तावुभौ च नयानयौ (12)

विपरीतं न वेद वीर्यदर्पेण

केवलं वीर्यदर्पेण नानुबन्धो विचारितः (4)

हितानि निरूपयेत्

हितानुबन्धमालोक्य कार्याकार्यमिहात्मनः ।

बुद्धिजीवनैः अमात्यैः सह कार्यं च निरूपयेत् ।

राजा सहार्थतत्त्वज्ञैः सचिवैः बुद्धिजीवनैः (13)

अहितं हितारं यस्य प्रतिभाति स मन्त्रायोग्यः ।

अहितं च हिताकारं धाष्ट्र्यात् जल्पन्ति ये नराः ।
अवेक्ष्य मन्त्रबाह्यास्ते कर्तव्याः कृत्यदूषकाः (14)

---

1 In capter 6, Kumbhakarṇa's Hitopadeśa to Rāvaṇa is described as in sarga 63 (Rāmāyaṇa Yuddhakāṇḍa).

# महाधर्मपालजातकम्

( पालिभाषातः अनूदितम् )

( निबन्धकः—श्रीअमरेन्द्रमोहन तर्कतीर्थः )

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति काशीराष्ट्रे धर्मपालो नाम ग्राम आसीत्। स धर्मपालकुलस्य वसनतया एतन्नाम लेभे। तत्र दशानां कुशलकर्मपथधर्माणां पालनात् धर्मपाल इत्येव प्रज्ञातो ब्राह्मणः प्रतिवसति। तस्य कुले [1]अन्तिमतः दासकर्मकरा अपि दानं ददति शीलं रक्षन्ति उपोषितकर्म कुर्वन्ति। तदा वाराणस्यां तस्मिन् कुले निर्वृत्ते ( पुत्रे ) धर्मपालकुमार इत्येव अस्य नाम अकार्षीत्। अथैनं वयः-प्राप्तं पिता सहस्रं दत्त्वा शिल्पोद्ग्रहणार्थाय तक्षशिलां प्रेषयत्। स तत्र गत्वा दिशाप्रमुख्याचार्यस्य अन्तिके शिल्पमग्रहीत्, पञ्चानां मानवक-शतानां ज्येष्ठान्तेवासिकोऽभूत्। तदा आचार्यस्य ज्येष्ठपुत्रः कालम् अकार्षीत्। आचार्यो मानवपरिवृतो ज्ञातिगणेन सार्द्धं रुदन् श्मशाने तस्य शरीरकृत्यं कारयति। तत्राचार्यश्च ज्ञातिवर्गश्च अस्यान्तेवासिकाश्च रुदन्ति परिदेवयन्ते धर्मपालश्चैको न रोदिति न परिदेवयते। अपि च खलु पुनः तेषु पञ्चशतेषु माणवकेषु श्मशानमागत्य आचार्यस्यान्तिके निषद्य 'अहो एवंरूपो नाम आचारसम्पन्नस्तरुणमाणवकः तरुणकाल एव मातापितृभ्यां विप्रयुक्तः मरणं प्राप्तः' इति वदत्सु 'सौम्याः यूयं तरुण इति भणथ, अथ कस्मात्तरुणकाल एव मृतः, अयुक्तं तरुणकाले मर्तु'मित्याह। अथैनं ते आहुः—"किं पुनः सौम्य त्वमेषां सत्त्वानां मरणस्वभावं न जानासी"ति।

"जानामि, तरुणकाले पुनर्न म्रियते [2]महल्लिककाल एव म्रियत इति।"

---

1 मू॰ "अन्तमसो किं बहुना इति फलितार्थः।

2 महल्लिकः अन्तःपुररक्षकः, तस्य काले वार्धक्ये इत्यर्थः।

"ननु अनित्याः सर्वे संसाराः, भूत्वा अभाविन इति"।

"सत्यम् अनित्याः, दहरकाले पुनः सत्त्वा न म्रियन्ते, महल्लिककाले अनित्यतां प्राप्नुवन्तीति।"

"किं पुनः सौम्य धर्मपाल युष्माकं गेहे न केचित् म्रियन्त इति ?"

"दहरकाले पुनः न म्रियन्ते, महल्लिककाल एव म्रियन्त इति"।

"किं पुनरेष युष्माकं कुले प्रवेणीति" ?

"अस्माकं कुले प्रवेणीति"।

मानवकास्तां तस्य कथां आचार्याय अवोचन। अथैनं स प्रक्रोश्या पृच्छत्—सत्यं किल तात धर्मपाल युष्माकं कुले दहरकाले न म्रियन्त इति ?

"सत्यम् आचार्या" इति। स तस्य वचनं श्रुत्वाऽचिन्तयत्—अयमतीवाश्चर्यं वदति, अस्य पितुरन्तिकं गत्वा पृष्ट्वा स चेदेतत् सत्यं (वदेत्) अहमपि तमेव धर्मं परिपूरयिष्यामीति।

स पुत्रस्य कर्तव्यकृत्यं कृत्वा सप्ताष्टदिवसात्ययेन धर्मपालं प्रक्रोश्य "तात अहं विप्रवत्स्यामि, त्वं यावत् ममागमनं इमान् माणवकान् शिल्पं वाचये"त्युक्त्वा एकस्य एडकस्य अस्थीनि गृहीत्वा धावयित्वा वासयित्वा प्रसेव्यके कृत्वा एकं क्षुद्रं उपस्थायकमादाय तक्षशिलातो निष्क्रम्य आनुपूर्व्येण तं ग्रामं प्राप्य कतरत् महाधर्मपालस्य गृहमिति पृष्ट्वा गत्वा द्वारि अस्थात्।

ब्राह्मणस्य दासमनुष्येषु यो यः प्रथमम् अद्राक्षीत् स स आचार्यस्य हस्तात् छत्रमग्रहीत् उपानहावग्रहीत्। 'पुत्रस्य वो धर्मपालकुमारस्य आचार्यो द्वारि स्थितः इति कुमारस्य पितुः ब्रूत' इति च उक्ते, ते 'साधु' इत्युक्त्वा (तथा) अवोचन। स वेगेन द्वारमूलं गत्वा इतः एत इति तं गृहमानीय पर्यङ्के निषाद्य सर्वं पादधावनादिकृत्यमकार्षीत्। आचार्यो भुक्तभोजनः सुखकथायै निषण्णः काले 'ब्राह्मण पुत्रस्ते धर्मपालकुमारः प्रज्ञावान् त्रयाणां वेदानां अष्टादशानां च शिल्पानां निष्पत्तिं प्राप्तः, अपि

खलु पुनरेकेन अस्पर्शकेन[3] जीवितक्षयं प्राप्तः सर्वे संसारा अनित्याः, मा शोची'रित्याह। ब्राह्मणः पाणिं प्रहृत्य महाहसितमहासीत'। "किन्नु ब्राह्मण हससी"ति चोक्तः "मम पुत्रो न म्रियते, अन्यः कोऽपि मृतो भविष्यति" इत्याह। "ब्राह्मण पुत्र एव मृतः, अस्थीनि दृष्ट्वा श्रद्धेही"ति अस्थीनि निहृत्य "इमानि ते पुत्रस्यास्थीनी"त्याह।

"एतानि एडकस्य वा शुनो वा भविष्यन्ति मम पुनः पुत्रो न म्रियते, अस्माकं कुले यावत सप्तमीं कुलपरिवृत्तिं तरुणकाले मृतपूर्वो नाम नास्ति, त्वं मृषा भणसी"ति।

तस्मिन् क्षणे सर्वेऽपि पाणिं प्रहृत्य महाहसितमहासिषुः। आचार्यस्तद् आश्चर्यं दृष्ट्वा सौमनस्यप्राप्तो भूत्वा "ब्राह्मण युष्माकं कुलप्रवेण्यां दहराणाम-मरणेन न शक्यमहेतुकेन भवितुम्, केन भोः कारणेन दहराः न म्रियन्त इति पृच्छन प्रथमां गाथामाह—

　　किं ते व्रतं किं पुन ब्रह्मचर्यं
　　　　कस्य सुचीर्णस्य अयं विपाकः।
　　आख्याहि मे ब्राह्मण एतमर्थं
　　　　[4]कस्माद्धि वो दहरा न म्रियन्ते॥

इति।

तच्छ्रुत्वा ब्राह्मणो येषां गुणानामनुभावेन तस्मिन कुले दहरा न म्रियन्ते तान वर्णयन—

　　धर्मं चरामो न मृषा भणामः
　　　　पापानि कर्माणि विवर्जयामः।
　　अनार्यं सर्वं परिवर्जयामः
　　　　[5]तस्माद्धि नो दहरा न म्रियन्ते॥

---

3 मू० अफासुकेन। अस्पर्शकेन स्पर्शानर्हसंक्रामकरोगविशेषेणेत्यर्थः।

4 मू० कस्माहि तुयहं।

परिवारेण प्रैषयत्।

5 मू० तस्मा हि अम्हम्।

शृणुमो धर्ममसन्तं सन्तं च
न कमपि धर्ममसन्तं रोचयामः ।
धृत्वाऽसन्तं न जहीमः सन्तं
ततोऽस्माकं दहरा न म्रियन्ते ॥

पूर्वेण दानात् सुमनसो भवामः
ददतोऽपि चात्ममनसो भवामः ।
दत्त्वाऽपि च नानुतपामः पश्चात्
तस्माद्धि नो दहरा न म्रियन्ते ॥

श्रमणान् वयम् ब्राह्मणान् अध्वगांश्च
[6]वनीयकान् याचनकान् दरिद्रान् ।
अन्नेन पानेन वितर्पयामः
तस्माद्धि नो दहरा न म्रियन्ते ॥

वयञ्च भार्या नातिक्रामामः
अस्मांश्च भार्या नातिक्रामन्ति ।
अन्यत्र ताभि र्ब्रह्मचर्यं चरामः
तस्माद्धि नो दहरा न म्रियन्ते ॥

एतासु वै जायन्ते [7]सुग्रीवासु
मेधाविनो भवन्ति प्रभूतप्रज्ञाः ।

( क्रमशः )

---

6 वनीयकान्, याचकान् ।

7 मू० suggavāsu 'सूत्तमासु' इति पाठभेदः

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता । Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road,

Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,

9, Panchanan Ghose Lane, Calcutta.

January, 1943 Reg. No. C. 1073



सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः

भारते भातु भारती

संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# संस्कृतसाहित्यपरिषत

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

January, 1943 | १८६४-शकीये पौषे २५श-वर्षस्य ९म-संख्या | Vol. XXV No. 9

## उपनिषदामद्वैतपरता

( पूर्वानुवृत्तिः )

द्वितीयमन्त्रव्याख्याने तु—"यत कुर्वन्नेवेह कर्माणीत्ययं विधिराविद्व-द्विषय एव, न ब्रह्मविद्विषयः ; तस्य विधिनिषेधशास्त्रवश्यत्वाभावात, तस्य ब्रह्मज्ञानाग्निनाऽधिकारः प्रनष्ट" इति शांकरं व्याख्यानम्, तत्प्रकरणा-विरुद्धम्, विद्यां चाविद्यां च यस्तद्वेदोभयं सह अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत इत्युपरितनविध्यन्तरविरुद्धं च मन्वानाः कूर-नारायणा वेदान्तदेशिकाश्च—द्वितीयमन्त्रे एवं विरक्तस्य विदुषः फल-सङ्गकर्तृत्वादिवियुक्तो ब्रह्मविद्याङ्गभूतः कर्मयोगो यावज्जीवमनुष्ठेय इति तात्पर्यं मन्यन्ते। एतन्मते—जिजीविषेदित्यस्य जीवेदिति विवरणम् विद्यां चेत्युपरितनमन्त्रेऽङ्गत्वेन विहितस्य कर्मणः समुच्चयसूचकसहशब्द-

प्रयोगानुपपत्तिः, त्यक्तेनेति वैकुण्ठपर्यन्तस्य जगतो विरागप्रतिपादनायोगः, ब्रह्मविद्यायामस्यां कर्मयोगस्याप्रकृतत्वादप्रकृतार्थकल्पनापत्तिश्च दूषणम्। अद्वैतमते तु—कुर्वन्नेवेह कर्माणीत्यनुवादो ब्रह्मविद्यास्तुत्यर्थ इति न प्रकरण-विरोधः, विद्यां चाविद्यां चेति कर्मोपासनयोः समुच्चयेऽपि ब्रह्मविद्याकर्मणो-स्समुच्चयस्याङ्गाङ्गिभावस्य वाऽत्राविवक्षणान्नोक्तानुपपत्तिः, सर्वापेक्षा चेति सूत्रे तद्विषयवाक्ये—"यज्ञेन दानेने"ति वाक्ये च यज्ञादीनां विद्यासाधनत्वे प्रतिपादितेऽपि तयोः सहानुष्ठानं समुच्चयपक्षो वा सहशब्दावगतो न विवक्षितः, इति तयोर्भिन्नविषयत्वान्नैकवाक्यता चेति न कोऽपि विरोध इति मन्यते। पुरुषार्थाधिकरणे—"स्तुतयेऽनुमतिर्वे"ति "कुर्वन्नेवे"त्यादीनां यत् स्तुत्यर्थत्वेन न विधौ तात्पर्यमिति निरूपितम्, तदपि तु अद्वैतसिद्धान्त-मेव पोषयति। अतः सौत्रमपि विवरणमद्वैतिनामेव॥

अत एव—"असुर्या नाम ते लोका" इति तृतीयो मन्त्रः सङ्गच्छते, येन विदुषा निन्दाद्वारा विद्यायाः स्तुतिः प्रस्तूयते। अयमेवार्थः श्रीभाष्यानुयायिभिरपि स्वीक्रियते। मतद्वयेऽपि "अनन्दा नाम ते लोका अन्धेन तमसा वृता" इति बृहदारण्यकवचनेनैकवाक्यताऽपि मन्यते॥

इदमेवात्रालोचनीयम्—किमिति द्वितीयेन मन्त्रेण कर्मयोगमुपक्रम्य "विद्यां चानुपक्रम्याकस्मादविदुषो निन्दा क्रियते, कर्मयोगिनोऽप्यविद्वांसो वा नवेति च। वयं तु पश्यामः—कर्मयोगिनामप्यविद्वत्तासामान्यादत्र निन्दाद्वारा संन्यासयोगः, तत्साध्यो ज्ञानयोगश्चैवात्र स्तूयते, तत्र प्रवर्तनार्थमिति॥

तुरीयपञ्चमषष्ठमन्त्रा ब्रह्मणो विचित्रशक्तियोगम्, सर्वस्य शरीर-शरीरिभावेन परमात्माधीनस्थितिकत्वेन च ब्रह्माभेदं च प्रतिपादयन्तीति मन्यमानाः श्रीभाष्यानुयायिनस्तु—मत्स्थानि सर्वभूतानि, नच मत्स्थानि भूतानि पश्य मे योगमैश्वरमिति गीतार्थमेव संगृहीतमभिप्रयन्ति। तथाऽभिप्रयन्तश्चेमे—आत्मन्येवानुपश्यति आत्मैवाभूत एकत्वमनुपश्यतः इत्यादौ क्लिष्टकल्पनयैव योजनम् विशिष्टरूपेणैकत्वादिपरताश्रयणं

वा स्वीकुर्वन्ति। अद्वैतमते तु नैवम्। तत्र हि—पृथिव्याद्यवच्छिन्न-चैतन्यकार्याणामपि चैतन्यांश एवोपादानकारणम्, न पृथिव्याद्युपाध्यंश इति विवक्षयाऽऽत्मन्येवेत्येवकारः, आत्मैवाभूदित्यत्रापि अधिष्ठानमात्रसत्ता-बोधनेनैवकारः, एकत्वमनुपश्यत इत्येकत्वाम्नानेन सर्वभूतान्यात्मनीति सामानाधिकरण्यस्यैक्यपरत्वम्, बाधापरत्वं वा, नतु शरीरशरीरिभाव-परत्वादिति विवक्षया—एकत्वमिति च स्वरसमुपपद्यते ॥

एतेन अष्टमो मन्त्रोऽपि—व्याख्यातः। तत्र हि अकायपदं सर्वशरीर-कमपि कर्मशरीररहितपरतया श्रीभाष्यानुयायिनो विवृण्वते। न हि कुत्रापि स्पष्टं ब्रह्मणः सर्वशरीरकत्वं प्रतिपादितम्, इति अकायपदार्थे संकोचनं क्लिष्टतरमेव। अतः शरीरसामान्यराहित्यमेवात्र प्रतिपादनीय-मद्वैतिनो मन्यन्ते। याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्य इति मन्त्रांशस्तु—ब्रह्मप्राप्तिपर्यन्तं प्रलयकालपर्यन्तं वा प्रपञ्चसत्वमेव प्रतिपाद-यतीत्येव मतद्वयेऽपि विवक्ष्यते। अयमेव विशेषः—प्रलयो नामात्यन्ति-कोऽपि तुरीयोऽविद्यानाशेन साकं वर्तत इति तन्नाशे प्राकृतानां सर्वेषामपि नाशो बाधो वा वर्तत इत्यद्वैतिनो मन्यन्ते, इतश्च नोपादाननाशप्रयुक्तः प्रपञ्चनाशः संभवति उपादानस्य प्रकृतेर्नित्यतायास्तन्मते स्वीकारात्। तत्र भगवत्पादभाष्यदृष्ट्या समापदेन प्रजापतीनां ग्रहणे तु अविद्व-द्विषयेयं सृष्टिरिति व्यवस्थापयितुं प्रश्नोपनिषदेकवाक्यतया पूर्वोक्तप्रकारेण शक्यते। ऐन्द्रिजालिकत्वं हि व्यवहारदशायामेव बाध्यत्वमद्वैतिनोऽपि स्वाप्नादिव्यतिरिक्तानां न स्वीकुर्वन्ति भगवत्सृष्टानाम्। स्वाप्निका अपि भगवत्सृष्टा इति तु नात्र लेशतोऽपि समालोचितमिति प्रकृत ऐन्द्रजालि-कत्वमतनिरासः श्रीभाष्यानुयायिनामनवसर एव ॥

अन्धं तमः प्रविशन्ति इति विद्याऽविद्ययोः स्वतन्त्रयोर्निन्दापुरस्सरं समुच्चितयोरङ्गाङ्गिभावेनामृतप्राप्तिसाधनत्वमेवोपदिश्यते, विद्या चेयमुपास-नैव, न तदतिरिक्ता साक्षात्कारमात्ररूपेति मतद्वयसम्मतमिदम् ॥

इदमेवात्रालोचनीयम्—किम्—यत् तेन त्यक्तेन इति कुर्वन्नेवेह

इति च प्रक्रान्तयोरत्र ग्रहणम्, उतान्ययोरिति। तत्र श्रीभाष्यानुयायिमते—मन्त्रद्वयेनापि कर्मयोगमात्रमुच्यते, नतु योगद्वयं स्वतन्त्रमिति मन्यते। तत्र च विद्याङ्गतयेत्यध्याहारात्तु वस्तुगत्योभयोरपि समुच्चितयोरेव न तत्रापि ग्रहणमिति तैर्वक्तव्यम्। सति चैवम्—कुर्वन्नेवेति मन्त्रार्थ एवात्राप्यनूद्यत इति फलति। तत्र च केवलकर्मयोगस्यापि निन्दाया तात्पर्यं असुर्या नाम ते लोका इति मन्त्रेणापि ज्ञानविधुरकर्मणो निन्दयैव निर्णीते किं पुनरपूर्वतत्वम्—अन्धं तम इत्यादिभिस्त्रिभिर्मन्त्रैः प्रतिपाद्यते। कर्मरहितज्ञानयोगनिन्दार्थं यदि ते विवक्ष्यन्ते, तर्हि श्रीभाष्यमते ज्ञानकर्मणोरङ्गाङ्गिभावस्य विवक्षणात् कर्मयोगं विहाय ज्ञानयोगस्यानुष्ठानमप्रसक्तमेवेति विशदमेव। अङ्गाङ्गिनोः समुच्चयः खल्वत्र मन्त्रेषु विवक्ष्यते। अद्वैतमते तूपासनाकर्मणोर्नाङ्गाङ्गिभावः, नवाऽन्यतरानुष्ठानमात्रेणानन्दप्राप्तिः। अतोऽनानन्देतरलोकप्राप्तिमुद्दिश्योभयोः समुच्चितयोर्विधानं मन्यते—केवलकर्मफलम्, केवलोपासनाफलं चानन्दलोक एव। इतरस्याप्येवमसंश्लेष इति न्यायात् केवलकर्मयोगस्तु—विविदिषाङ्गतयोपकरोति, केवलोपासना तु तत्फलमात्रस्योपकरोति। उभयोरनुष्ठानतः क्रममुक्तिर्भवति, यत्र भोगमात्रसाम्यम्, आनन्दात्मकलोकप्राप्तिरिति तु निष्कर्षः फलति। सर्वथा तु—विद्याशब्देनात्र न मुख्या ब्रह्मविद्या विवक्ष्यते, किन्तु प्रजापत्युपासनादिरेव॥

अत एव—शाश्वतीभ्यः समाभ्य इति संवत्सरात्मकप्रजापतिपर्यन्तत्वं लोकानां निरूप्यानन्तरमेवेमे मन्त्राः प्रयुक्ताः प्रजापतिलोकपर्यन्तमनानन्दा नाम तु लोका इति तु हृदयम्। अमुमेवार्थं—तद्ये ह वै तत्प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते। तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम्। तेषामेष विरजो ब्रह्मलोकः न येषु जिह्ममनृतं न माया चे"ति प्रश्नोपनिषदपि प्रतिपादयति। विशदं चैतत् तन्मन्त्रव्याख्यानावसरे भगवत्पादैरपि प्रथमप्रश्नान्ते निरूपितम्—विरजो ब्रह्मलोक इत्येषा ज्ञानयुक्तकर्मवतां गतिः, पूर्वोक्तस्तु ब्रह्मलोकः केवलकर्मिणां

चन्द्रलोकलक्षण इति। अत्र केवलकर्मिपदम् केवलोपासकस्याप्युपलक्षणमिति तु भाष्यहृदयम् ॥

अयमत्र निष्कर्षः—ब्रह्मलोको द्विविधोऽनानन्दलोकश्चन्द्रलोकः पुनरावृत्तियोग्यः, आनन्दलोकाख्यश्चापुनरावृत्तियोग्यः। व्यक्तं चैतत प्रश्नोपनिषदि प्रथमप्रश्ने नवमदशम-मन्त्रयोः। श्रीभाष्यानुयायिनोऽपि ब्रह्मलोकमत्र विवक्षितमनात्मकामिनामात्मकामिनां चेति मन्यन्त एव। इयान् विशेषः—यद् द्वितीयो ब्रह्मैव लोकः परमात्मस्वरूपमिति तन्मतम्, अद्वैतिनां तु हिरण्यगर्भलोक एव सः यत्र भोगमात्रसाम्यमपुनरावृत्तिश्चेति। मुख्यब्रह्मप्राप्तावपि भोगमात्रसाम्यमेव ते मन्यन्ते, अद्वैतिनस्तु कृत्स्नभावापत्तिमिति तु विशेषः। तत्राद्वैत्यभिमतं ब्रह्मस्वरूपं मुक्तात्मस्वरूपं च तदेकतार्हम्—तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्युक्तमित्यपि सूचितम् ॥

( क्रमशः )

## शान्ताया जनकः कः ?

[ निबन्धकः—वि· कृष्णस्वाम्यय्यङ्गार्यः ]

श्रीमद्वाल्मीकिरामायणे बालकाण्डे नवमे सर्गे सुतार्थं तप्यमानस्य वसिष्ठादीनां महानुभावानामभ्यनुज्ञया हयमेधमाजिहीर्षोर्दशरथस्य श्रेयोलाभमपेक्षमाणः सुमंत्रो नाम पटुमतिरमात्यः पुरा कदाचित्कथाप्रसङ्गे भूतभविष्यदभिज्ञेन सनत्कुमारेण वर्णितः कोऽपि वृत्तान्तस्समीहितपूर्तिसाधक इत्युपादिश्यत। सुमंत्रमुखाद्विभण्डकसुतस्य ऋश्यशृङ्गस्य विस्मयापादकं महिमानमाकर्ण्य मनोरथसिद्धावुपजातप्रत्ययो दशरथस्समग्रां कथां जिज्ञासुस्सुमंत्रमप्राक्षीत्। स च राज्ञाऽनुमोदितमात्माभिप्रायमवेक्ष्य मुदितचेताः स्वामिभक्तो मंत्री यथाश्रुतं निरवशेषां कथामश्रावयद्दशमे सर्गे। रोमपादो नामाङ्गदेशाधीश्वरः केनापि धर्मव्यतिक्रमेण बहुकालव्यापिन्यामनावृष्टावापतितायां प्रजानामपरिमितं दुःखानुभवमवलोक्य जातपरितापो दुर्भिक्ष-

निवारणस्योपायान्विज्ञातुं ब्राह्मणानाकारयामास । तत्त्वदर्शिभिस्तैर्भूसुरवर्यैः 'विभण्डकसुतस्यानयनमेव सुभिक्षसम्पादनाय प्रभवतीत्यावेदितश्च कार्यमेतद्दुष्करं निर्वर्तयितुममात्यानादिदेश । स्त्रीजात्यनभिज्ञस्य कठोरं ब्रह्मचर्यव्रतमनुतिष्ठतस्तस्य महात्मनो धर्मवीर्याच्छङ्कितमतीनुपसर्पणासमर्थान्मंत्रिणो दृष्ट्वा शापभयग्रस्तो बलात्कारमनुपयुक्तं मन्यमानश्च राजा पुनरालोच्य कार्यस्य गुणदोषौ वारवनिताभिस्तमानाययितुमाज्ञापयामास । राजनिर्देशानुवर्तिन्यश्च ता रूपजीवा नानाविधानि वेषभूषणानि धारयमाणास्तापसावासं काननमागत्य कस्मिंश्चिद्रमणीय उद्देशे महर्षिपुत्रमृश्यश्रृङ्गमद्राक्षुः । विकारवार्तानभिज्ञेन प्रसन्नेन परमात्मगुणध्यानपरेण चेतसा स ऋषिकुमारो दूरादागतस्यातिथिजनस्य सत्कारमावश्यकं धर्मं जानानः स्वादु कन्दमूलादिकमाभ्य उपजहार । एताश्च परेद्युः कृतसङ्केता नागरकाणामातपरिचितां कपटवृत्तिमवलम्ब्य तामसाहाररूपतया बुद्धिभेदजनकानपूपांस्तस्मै प्रदाय, इमान्यशेषाणि देशान्तरफलितानि मधुररस-स्यन्दीनि फलानि परिग्रहमर्हन्तीति प्रतारयामासुः । अन्ते चास्माकमाश्रमपदमेकवारमागत्य भवानवलोकतामिति प्रार्थनामूरीकृतवता तेन साकमङ्गदेशसीमनि पदं न्यधिषत । ऋश्यश्रृङ्गस्य कठिनतपश्चर्याप्रभावेन सपदि महती वृष्टिरजायत, यथा दुर्भिक्षग्रस्ताः प्रजा विस्मृतपूर्वव्यथाः परमानन्दभरिताः प्रासीदन । विदितवृत्तान्तश्च मुनिकुमारं प्रसादयितुकामो रोमपादः स्वपुत्रीं शान्तामस्मै प्रदातुमीहामास । निर्व्याजकृपानिधिस्सोऽपि राजकुमार्याः पाणिग्रहणमन्वमंस्त ।" इत्येषा सनत्कुमारेणाऽऽख्याता कथा । सुमंत्रस्य वचनं यथार्थमनुमन्यमानो दशरथस्सान्तःपुरस्सहामात्यश्च महता वैभवेन रोमपादस्य राजधानीं प्रतस्थे । प्रियवयस्यस्य कोसलपतेरभ्यर्थनां सार्थकयितुमुद्यतेन रोमपादेन शान्ताजानिर्गमनायाऽनुज्ञातः साकेतमाजगाम । ऋत्विजा ऋश्यश्रृङ्गेण साकं प्रमोदनिर्भरान्तरङ्गो दशरथः कोसलराजधानीमयोध्यां प्राविक्षदिति कथा बालकाण्डस्यैकादशे सर्गे वर्णिता । "ऋश्यश्रृङ्गस्तु जामाता पुत्रांस्तव विधास्यती" ( बा० स० ६, श्लो १८ ) त्यत्र सुमंत्रवचने सम्बोधनविषयस्य

दशरथस्य जामातेत्येव प्रत्यासत्तिबलादर्थं कल्पनीये, उत्तरत्र "शान्ता तव सुता राजन सह भर्त्रा विशांपते। मदीयं नगरं यातु कार्यं हि महदुद्यत"-(११-२०) मित्यत्र दशरथवाक्ये शान्ता रोमपादस्य राज्ञः कुमारीति स्पष्टतया प्रतिपादनात्तेन साकमविरोधाय रोमपादस्येत्यध्याहृत्य तस्य जामाता तव पुत्रान्विधास्यतीत्येव व्याख्यातव्यम्। एतदनुरोधेन च 'कन्या चास्य महाभागा शान्ता नाम भविष्यती' (११-३)त्यत्र सनत्कुमारवाक्ये-ऽपीदंशब्देन रोमपादस्यैव परामर्शो न्याय्यः। एवञ्च रामायणानुसारेण शान्तायाः पिता रोमपाद इति सिध्यति। परन्तु दशरथो यदार्त्वि-ज्याधिकारे तपस्विकुलभूषणमृश्यशृङ्गं निमंत्रयितुकामस्सख्युरङ्गाधिराजस्य समीपमुपागतोऽपि शान्ता तव सुतेति प्राधान्येन शान्तामेव निर्दिशति। शाब्दगुणक्रियाद्यन्वयाभावरूपस्य शास्त्रीयस्यैवाप्राधान्यस्य सहयुक्तेऽप्रधान इति सूत्रयता पाणिनिना विवक्षणात्कार्यार्थित्वरूपं लौकिकं प्राधान्यमृश्य-शृङ्गस्य निर्बाधमिति तु नोचितम्। समानस्थानापन्नयोर्द्वयोरन्यतरं प्रति त्वया तेन सहाऽऽगन्तव्यमित्यभिहिते तस्य स्वस्मिन्नप्राधान्यबुद्धिर्वक्तुरस्तीति क्वचिद्दुःखानुभवस्यापि दर्शनात पिता पुत्रेण सहाऽऽगच्छतीत्यादौ पुत्रस्य प्राधान्यविवक्षणासम्भवाच्च सहयुक्तस्य लौकिकमप्राधान्यमेवेति सिद्धान्तात्। शान्ताया वक्ष्यमाणरीत्या दशरथ एव जनक इति स्वीकारे तु पुत्रीवात्सल्येन निमित्तेन तस्याः प्राधान्यनिर्देशस्सङ्गमयितुं शक्यः। तव सुतेति तु पोषणादि पितृकृत्यं त्वयैव निर्वर्तितमित्येवमुपचारार्थकतयाऽपि समर्थयितुं शक्यते। रोमपादस्य मित्रस्य गृहे शान्तायाः पालनपोषणादिकमभवदिति नेदं कदाऽप्यस्वाभाविकम्। अस्यापि पक्षस्य युक्तिभिरनुगृहीतस्योल्लेखो व्याख्याकारेण गोविन्दराजेन कृतः—'जामाता दशरथस्य रोमपादस्य वा। दशरथस्यौरसी शान्ता दत्ता रोमपादस्ये' त्याचक्षाणेन। न चात्र संप्रदानभूतस्यापि रोमपादस्य षष्ठ्यन्तशब्देनाभिधानात स्वस्वत्वनिवृत्ति-पूर्वकपरस्वत्वापादनरूपस्य दानस्याविवक्षणमेवाभिप्रेतमिति वाच्यम्। दत्त-स्वीकारविधेः परिसमाप्तौ स्वस्वत्वनिवृत्तेर्न्यायप्राप्तत्वेन षष्ठ्यास्संप्रदान-

स्यापि विवक्षातः कारकाणि भवन्तीति न्यायमनुसृत्य शेषत्वरूपेण विवक्षणादेव साधनीयत्वात् भूतपूर्वगत्याश्रयणेनैव च दशरथपुत्रीत्वव्यवहारोऽपि न विरुध्यते। एवमङ्गीकारे च शान्ता तव सुता राजन्नित्येतद्दशरथवचनमपि सम्यगुपपादितं भवति।

यद्यपि बाल्मीकिरामायणस्यैकस्य पर्यालोचनया शान्ता रोमपादस्यैवात्मजेति स्वीकारे विरोधिप्रमाणाभावान्न काचिदसङ्गतिः प्रतिभाति, तथापि हरिवंशे दशरथस्य पुत्रीति नामग्रहणपूर्वकं प्रतिपादनादुभयोरपीतिहासग्रन्थयोरैककण्ठ्यसम्पादनस्यावश्यकत्वादेतादृश्यामपि क्लिष्टकल्पनायामादरो दुर्निवारः। हरिवंशे ह्येकत्रिंशे सर्गे,

अंगपुत्रो महानासीद्राजेन्द्रो दधिवाहनः।
दधिवाहनपुत्रस्तु राजा दधिरथोऽभवत॥
पुत्रो दधिरथस्यासीच्छक्रतुल्यपराक्रमः।
विद्वान् धर्मरथो नाम तस्य चित्ररथस्सुतः।
तेन चित्ररथेनाथ तदा विष्णुपदे गिरौ।
यजसा सहचक्रेण सोमः पीतो महात्मना।
अथ चित्ररथस्यापि पुत्रो दशरथोऽभवत।
लो(रो)मपाद इति ख्यातः शान्ता यस्य सुताऽभवत॥"

( क्रमशः )

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

February, 1943 Reg. No. C. 1073



सम्पादकः—
महामहोपाध्याय-
श्रीअनन्तकृष्णशास्त्री
सहकारि-सम्पादकः—
श्रीउपेन्द्रमोहन-
सांख्यतीर्थः

भारते भातु भारती

संस्कृत-साहित्य-
परिषदो मासिकं
मुखपत्रम्

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| February, 1943 | १८६४-शकीये माघे<br>२५श-वर्षस्य १०म-संख्या | Vol. XXV<br>No. 10 |
|---|---|---|

## उपनिषदामद्वैतपरता

( पूर्वानुवृत्तिः )

“अन्धं तमः प्रविशन्ती”ति पुनरपि त्रयो मन्त्राः सभूत्यसंभूतिविषया ये श्रूयन्ते ; ते तु ब्रह्मविद्याङ्गसमाधि-तदङ्गयोः समुच्चयं प्रतिपादयन्ति, इति श्रीभाष्यानुयायिनः । अद्वैतिनस्तु—व्याकृताव्याकृतोपासनयोः समुच्चयमिमे प्रतिपादयन्तीति । संभूतिः कार्यब्रह्म, असंभूतिः प्रकृतिर्मा वेति त्वद्वैतिनः, श्रीभाष्यानुयायिनस्तु—संभूतिर्नाम समाधिः, असंभूतिस्तु समाधिव्यतिरिक्ता समाध्यङ्गभूता निषिद्धनिवृत्तिरिति । अत्र मन्त्र-त्रिकद्वयेऽपि—अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्ययेति अन्यदेवाहुः सभवादन्यदाहुरसम्भवादिति मन्त्रद्वयं मोक्षसाधनविद्याऽविद्याव्यतिरिक्तं वदतीति श्रीभाष्यानुयायिनः, अद्वैतिनस्तु—फलभेद एवोभयोरत्र विवक्ष्यत इति ।

तत्र प्रथममते—यदि विद्याऽविद्ययोरुभयोरपि न फलभेदः, तर्हि कथं न विकल्पोऽविशिष्टफलत्वादिति न्याय इत्यादि च पूर्वमेवालोचितम्। अङ्गाङ्गिनोरपि क्रमिकानुष्ठानस्यैव सिद्धत्वात्—कथं सहेति पदं सार्थकम् एवमङ्गाङ्गिनोरेककालानवरोधशङ्काया एवाप्रसंगात् किमर्थोऽत्र सहोक्तिरपीत्यादि बहु तत्र तत्र विस्तृतमेव ॥

षोडशो मन्त्रस्तु विमर्शनिकर्षस्थानमेव मतद्वयावलम्बिनामपि। यतोऽत्रादित्यान्तर्वर्तिनं पुरुषं सोऽहमस्मीति विदुषामात्मत्वेन निरूपयति—सोऽहमस्मीति। अनेन च—समश्चायं पुरुषो यश्चासावादित्ये। स एक इति तैत्तिरीयोपनिषदप्युपस्थाप्यते। तेन च सामानाधिकरण्यमत्र "एकत्वमनुपश्यत"इति प्रक्रान्तमुक्ततैत्तिरीयोपनिषद्विशदीकृतं चैक्ये सामानाधिकरण्यमेव, न तु शरीरशरीरिभावनिबन्धनमिति विशदीभवति। असावादित्यो ब्रह्म ब्रह्मैवाहमस्मीति श्रुत्यर्थ एवात्र प्रत्यभिज्ञायत इति तु निष्कर्षः॥

अत्रासौ पुरुष इति रविमण्डलाख्यशरीरादपि विविक्तं तदात्मस्वरूपं विवक्ष्यते रवेरप्यन्तर्यामीति मतद्वयसंप्रतिपन्नम्। अहमस्मीत्यत्रापि स्थूलसूक्ष्मकारणशरीराद्विविक्तं प्रत्यगात्मरूपमेवान्तर्यामितया विवक्ष्यत इति त्वद्वैतिनः, तेन च जीवब्रह्मणोरैक्यमन्तर्यामिस्वरूपेणैव लक्ष्यार्थेन, न त्वन्तर्यामिजीवयोरिति फलति। श्रीभाष्यादिमते तु—आदित्यान्तर्यामिण एव जीवान्तर्यामित्वस्यान्तर्यामिवाक्येन पृथग्वचनेनैवोपपादितत्वात् जीवस्य स्वान्तर्यामिणा शरीरशरीरिभावेऽस्यापि स्वान्तर्यामिणा शरीरशरीरिभावाभावात्—योऽसौ पुरुषः सोऽहमित्यादित्यान्तर्यामिणा साकं जीवस्य शरीरतामादाय सामानाधिकरण्यव्यवस्थापनमसङ्गतमेव स्यात्। वस्तुगत्याऽन्तर्यामिण एकत्वेऽपि तत्तच्छरीराणां भेदेन शरीरान्तरेण कार्यात्मकेन शरीरितादशायां शरीरान्तरेण तादात्म्यव्यपदेशायोगात्। मुक्तात्मदृष्ट्या नियामकैक्याभिप्रायोऽयं मन्त्र इति विवक्षायां तु स्वान्तर्यामिस्वरूपज्ञानं यमेवैष वृणुते तेन लभ्य इति मन्त्रोक्तेन तदीयेन मार्गेण परमात्मानुग्रहाधीनमिति पूषसविधे तत्प्रार्थनमनुपपन्नं स्यात्। अद्वैतमते तु—

उपाधिभेदेनैवात्मभेदात् स्वस्योपाधिविवेकेन ज्ञानेऽपि सगुणात् भेदज्ञान-निरासं विना न जीवब्रह्मैक्यानुभवसंभवः, इति सगुणस्याप्युपाधिविविक्त-स्वाभेदयोग्यात्मस्वरूपप्रकाशप्रार्थनमत्यावश्यकमेव। तेन च सगुणाधिष्ठान-मेव स्वस्याप्यधिष्ठानमिति जीवब्रह्मभेदानुसंन्धानं सङ्गच्छतेतराम्। तथाच —तत्त्वमस्यादिवाक्येष्वपि सामानाधिकरण्यमैक्य एवेति सिद्धान्त एवेशा-वास्योपनिषदाऽपि प्रतिपाद्यते।

अत्रेदमालोचनीयम्—योऽसौ पुरुषः सोऽहमस्मीति किमुद्दिश्य किं विधीयते। यदि पुरुषमुद्दिश्य सोऽहमस्मीति जीवशरीरकत्वं विधीयते, तर्हि उद्देश्यवाचकास्मदुपपदत्वाभावात् अस्मीत्युत्तमपुरुषप्रयोगानुपपत्तिः। यत्तु वेदान्तदेशिकानाम्—त्वं राजासि अहं राजाऽस्मीत्यादाविव तादधीन्याद्युप-चारविवक्षया "तत्त्वमसी"ति "सोऽहमस्मी"ति च मध्यमोत्तमपुरुषयोः साम-ञ्जस्यमिति वर्णनम्, तदिदं तदीयैरेव कूरनारायणैः—तदप्युपेक्षणीयमेव; लोकवेदयोश्चेतनपर्यन्तदेवमनुष्यादिव्यवहारबलेन जातिगुणशब्दवत् मुख्य-वृत्त्यैव निर्वाहसंभवे उपचारकल्पनस्यान्याय्यत्वादित्यादिना निरस्तमेव। अद्वैतमते तु—मुख्यवृत्तिमादायैव सामानाधिकरण्यम्। यथा च मुख्यवृत्तावपि तत्त्वपदयोस्तात्पर्यानुसारेण शाब्दबोधे कार्ये स्वरूपचैतन्यमात्रस्यान्वयः न तु विशिष्टस्य, तच्च परिभाषा-लघुचन्द्रिकादौ विशदमेव। "तत्त्वमसी"त्यत्र न किमप्युद्दिश्यते, न वा किमपि विधीयत इति श्रीभाष्यसिद्धान्ते तु—तत्त्वमसीत्यादौ मध्यमादिपुरुषप्रयोगोऽनुपपन्नः॥

पुरुषपदेन त्वत्र मुक्तात्मैव, गीतायामिव—"प्रकृतिं पुरुषं चैवे"त्यादाविव विवक्ष्यत इति तु केचन श्रीभाष्यानुयायिनः, तन्मतदृष्ट्या तु मुक्तात्मनां सर्वेषामपि परमात्मशरीरतया परस्परं भेदस्यैव श्रीभाष्यमते स्वीकृतत्वात् आत्मना सामानाधिकरण्यव्यपदेशो विरुद्ध एव। पुरुषशब्देनात्र नारायण एव विवक्षितः पुरुषसूक्तैकवाक्यतयेति वादस्तु—"ईशावास्यमि"तीशपदेनोपक्रमात् शिवार्कमणिदीपिकोक्तरीत्या—पुरुषसूक्तस्यापि शिवोत्कर्ष एव तात्पर्याच्च नोपपद्यत इति शैवविशिष्टाद्वैतवादिनो मन्यन्ते। अद्वैतिनस्तु

सगुणे कारणे शिवविष्णवादिसर्वपदवाच्ये न निर्भरं मन्यते, कारणस्वरूपं तत्पदवाच्यार्थ एव पुरुषपदार्थ इति तु तेषां निष्कर्षः, सर्वथा तु—षोडशोऽपि मन्त्रः सम्यग् विमृश्यमानः सामानाधिकरण्यादिघटितश्चाद्वैतवादमेव पोषयति ॥

सप्तदशो मन्त्रो—वायुरनिलमिति ब्रह्मविदां प्राणस्याधिदैवते वायौ लयप्रतिपादनमिति नोत्क्रमणापेक्षा मुक्तिरिति चाद्वैतिनां विवरणं तु श्रीभाष्यानुयायिनां हृदयशूलं स्यादिति भगवत एव वाय्वनिलशब्दवाच्यस्यानेनामृतत्वम्, अन्येषां मृत्युश्च प्रतिपाद्यतेऽनेन मन्त्रेणेति ते मन्यन्ते। परमात्मनित्यत्वं हीदं "स पर्यगादि"तिमन्त्रेऽव्रणपदेनैवावगतमिति वितथमत्र तन्निरूपणं पुनरपि ॥

एतेन—इतरनश्वरत्वमपि—व्याख्यातम्, "इदं शरीरं भस्मान्तमि"ति कार्यमात्रं यदि विवक्ष्यते, कार्यनित्यताया अप्रसक्तत्वात् कार्यत्वेनैव तदनित्यत्वस्याप्यवगतत्वात् तन्निरूपणमप्यत्र निष्प्रयोजनमेव। 'ओक्रतोस्मरे' त्यादिमन्त्रोऽपि कर्मणामपि विद्योत्पत्तावुपयोग इति सर्वापेक्षासूत्रतद्विषयवाक्यसिद्धमनुवदतीत्यद्वैतिनां विवरणमेव शोभतेतराम्, नतु क्रत्वादिरूपेण भगवदनुसन्धानमात्रम्। तेन रूपेणानुसन्धानस्य मुख्यप्रयोजनं तु नात्र किमपि दृश्यत इति त्वद्वैतिनः। तदेवं श्रीभाष्यदृष्ट्याऽद्वैतभाष्यदृष्ट्या चेशावास्योपनिषद् यथाशक्ति समालोचिता। इतःपरं श्रीमदानन्दतीर्थमतदृष्ट्योक्तामुपनिषदं समालोचयामः—

तद्यथा—ईशस्यावासयोग्यं स्वतः प्रवृत्त्यशक्तत्वाद् ईशाधीनम्, जगत्यां प्रकृतौ विद्यमानम् जगत्। प्रकृतिगत्वं हि जगत ईशावास्यत्वं विना नोपपद्यते। ततश्च तेनेश्वरेण त्यक्तेन प्रदत्तेन भोगः कर्तव्यः, नतु कस्यापि सविधेऽर्थस्य प्रार्थना कर्तव्येति प्रथममन्त्रार्थः। तेन च परमात्मनो नोपादानत्वम्, येन व्याप्तत्वं जगत इति स्यात्, नवा त्यागयोग्यताऽर्थस्य, येन संन्यासविधौ मन्त्रस्यास्य तात्पर्यं स्यादिति प्रतीयते। तथाचाद्वैतिना

( क्रमशः )

# शान्ताया जनकः कः ?

( पूर्वानुवृत्तः )

[ निबन्धकः—वि॰ कृष्णस्वाम्यय्यङ्गार्यः ]

इत्यमीभिः पद्यैः शान्ताया जनको रोमपादनाम्ना प्रसिद्धो दशरथ एवेति स्पष्टतया प्रतिपादनात् । एवं च दशरथो न तावदिक्ष्वाकुवंशीय इति नायं रामादीनां चतुर्णां वीरकुमाराणां जनकादभिन्नः । अङ्गवंशोद्भवश्चासौ दशरथस्य कोसलाधिपतेरिक्ष्वाकुकुलालङ्कारस्य प्रियवयस्यस्समाननामा कारणान्तरेण च रोमपाद इति लोकेषु प्रख्यातिमाससादेति न कश्चिद-नयोर्ग्रन्थयोर्विरोधः । एवं स्थिते गोविन्दराजस्य सन्देहमूलभूतं प्रमाणानुपन्यासाद्विश्वासानर्हं वचनमवलम्ब्य हरिवंशविरोधमापादयन्तः परास्तप्राया एव । हरिवंशेन शान्तापितू रोमपादस्यैव दशरथ इति नामान्तर-मप्यासीदित्येतावन्मात्रस्यैवाधिकविषयस्योपवर्णनात् । शान्ता तव सुता राजन्नित्यत्र शान्तायाः प्राधान्यं प्रियसखस्य रोमपादस्य तनूजायां पुत्री-निर्विशेषस्य वात्सल्यस्य प्रदर्शनायेत्यपि व्याख्यातुं शक्यम् । एवञ्च रामायणे हरिवंशे च शान्ताया ऐक्ष्वाकदशरथपुत्रीत्वं नैवोक्तमिति पौराणिका असत्यभाषणदोषात्प्रच्याविताः । विरुद्धव्याहारयोरन्यतरस्यान्यथाऽनृत-त्वमेवेति पुराणानामप्रामाण्यं सिषाधयिषतामुपकारसम्भवात् ।

यदपि केनचिद् व्याख्यात्रा "सान्तःपुरस्सहामात्यः प्रययौ यत्र स द्विजः" ( ११-१३ ) इत्यत्र शान्तायाः पुत्र्या दर्शनार्थमन्तःपुरागमन'मिति दलप्रयोजनमुपपादितं, तदप्यापाततः । उक्तरीत्या शान्ता रोमपादपुत्रीत्येव सिद्धेः । शान्ताभर्तुस्सहभार्यस्य साकेतागमने भविष्यति शान्तादर्शनाय दूरदेशप्रयाणे कारणाभावाच्च । तस्माद्दशरथस्तरुणीं भार्यां सुन्दरीं कैकेयीं कामयमानस्तद्वियोगदुःखस्यातीवदुर्विषहतया राजपत्नीनामसूर्यम्पश्यानामपि

देशान्तरसञ्चारेऽपेक्षासम्भवात्तासामिष्टार्थसम्पत्त्यै वा शान्तःपुर एव प्रस्थानमरोचयदिति युक्तं तात्पर्यकल्पनम्।

नन्वेवमपि "पुत्रस्त्वङ्गस्य राज्ञस्तु रोमपाद इति श्रुतः" इति (११-४) रामायणवाक्याद्रोमपादस्साक्षादङ्गराजपुत्र इति, उदाहृत-हरिवंशग्रन्थात्तु चित्ररथनाम्नो नृपतेरपत्यमिति च प्रतीतेर्विरोधो दुष्परिहर एवेति चेत्, सत्यम्। एतादृशविरोधप्रसङ्गे पुराणप्रामाण्यवादिभिराद्रियमाणं 'प्रतिकल्पमितिहासस्याऽऽवृत्तिर्भवति; तत्र क्वचिदंशे विपर्याससम्भावना न दोषायेत्युभयग्रन्थसङ्गतिः। अन्यथा महाभारते लक्ष्मणेन हतस्य कुम्भकर्णस्य रामायणे श्रीरामेण बधासम्भवा'दिति समाधानमाधुनिकविमर्शकानां न तृप्तिकरम्। न चाङ्गस्य अङ्गदेशस्य राज्ञश्चित्ररथस्येत्येव व्याख्याया विरोधस्संवटयितव्यः, अंगराजस्येति गोविन्दराजोक्तिरपि चित्ररथाभिप्रायेणैव प्रवृत्तेति न तस्या अप्रामाण्यापत्तिरिति वाच्यम्। व्यक्तिविशेषमनिर्दिश्य सामान्यरूपेण वंशानुकीर्तनस्य कुत्राऽप्यदर्शनात्। अङ्गानामीश्वर इत्येतावतैव राजवंशप्रसूतिरप्यनुमातुं शक्यत इत्येतस्य वाक्यस्य नैरर्थक्यप्रसङ्गाच्च। देशवाचकानामङ्गादिशब्दानां जनपदार्थपदार्थक-तद्धितप्रत्ययस्य लुपि युक्तवद्भावेन नित्यबहुवचनत्वादङ्गस्येति प्रयोगस्यासाधुत्वापत्तेश्च।

उत्तररामचरिते प्रस्तावनायां नटो नाम सूत्रधारानुचरः कश्चन 'वशिष्ठाधिष्ठिता देव्यो गता रामस्य मातरः। अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रम' मित्यभिदधानः, ऐक्ष्वाकदशरथस्य स्त्रीसन्तानाभावात्को वा जामातेति संशयितचेतसि सूत्रधारे 'वैदेशिकोऽस्मीति पृच्छामः, कः पुनर्जामाते''त्यनुयुञ्जाने, "कन्यां दशरथो राजा शान्तां नाम व्यजीजनत्। अपत्यकृतिकां राज्ञे रोमपादाय तां ददौ॥ विभण्डकसुतस्तामृश्यशृङ्ग उपयेमे। तेन द्वादशवर्षं सत्रमारब्ध"मिति कांचित्कथामाचष्टे। भवभूतिमहाकविर्यदि प्रमाणभूतं पुराणान्तरमनाश्रित्य रामायणमेवोपाजीविष्यत्, तर्हि नैतादृशीं वाल्मीकिनाऽदृष्टां कथां नाटकारम्भ उदाहरिष्यत्। हरिवंशेऽपि दशरथस्य रोमपादाख्यस्यांगवंशीयत्वाभिधानात्कथेयमुपजीव्यान्तर-

सापेक्षैव जागर्ति। एवं स्थिते यदद्भुतरामायणस्य व्याख्याता रामवर्मा "शान्ताभर्तारमानीय ऋश्यशृङ्गं तपोधन'मिति श्लोकं विवृण्वानः 'शान्ता लोमपाददशरथस्याङ्गपतेरेतद्दशरथमित्रस्य कन्या अनेन राज्ञा ततो लब्धा स्वदुहितृकत्वेन कल्पितेत्याख्यायिका" इति व्यलिखत, तदेतत्संशयवृक्षाल-वाले सलिलसेचनमात्रम्।

एवं रामायणे "रोमपादेन चाख्यातमृषिपुत्राय धीमते। सख्यं सम्बन्धकञ्चैव तदा तं प्रत्यपूजयत" (११-१८) इत्यत्र सख्यस्य पृथग्ग्रहण-सामर्थ्यात्तदतिरिक्तस्य सम्बन्धस्यैव प्रतीत्या 'शान्ताया जनकपितृत्वरूपं सम्बन्ध'मिति गोविन्दराजो व्याचख्यौ। उत्तरत्र च 'पूज्यमाना च ताभिस्से'त्यादि (११-३१) श्लोकव्याख्यावसरे 'विशेषतो जनकत्वसम्बन्धात् पितृगृहत्वाच्छान्तायाः प्राधान्य'मिति व्यलेखीत। 'कन्या चास्य महाभागा शान्ता नाम भविष्यती' (११-३) त्यत्राङ्गराजस्येत्येवार्थं वर्णयंस्तु शान्तां रोमपादाय तां प्रादादिति गोविन्दराजसम्मतः पक्षस्साधीयान, तर्हि कथमिव जनकत्वसम्बन्धमनादृत्य दत्तक-विधिबलसिद्धं पितृत्वमेव सनत्कुमार उदलेखिष्यत ? निरपत्यो वा दशरथः स्वपुत्रीं रोमपादाय कथं प्रदद्यान्नाम ? न चायं पुत्रसन्तानाभावादेव दुःखितः, 'तस्य त्वेवंप्रभावस्य धर्मज्ञस्य महा-त्मनः। सुतार्थं तप्यमानस्य नासीद्वंशकरस्सुत' (८।१) इत्यत्र वंशकरादि-विशेषणसामर्थ्यात्तथैवावगमादिति वाच्यम्। वंशकरत्वस्य स्त्रियामप्य-विशेषेण दर्शनात्सुतशब्दस्य पुंवचनस्याप्यपत्यमात्रार्थकत्वौचित्येन भवदिष्टासिद्धेः। 'यज्ञाय वरयामास सन्तानार्थं कुलस्य वै' (१२-२) इत्यत्र वंशाविच्छेदाय यज्ञारम्भकथनाच्च। यद्यपि कुमार्याः शान्तायाः पतिगृहवासितया तस्या ऐक्ष्वाकसन्ततिवृद्धिकरत्वमसम्भवग्रस्तं, पुत्राणामेव वंशवर्धनाधिकारादिति सर्वत्र सुतपुत्रादिपुंशब्दानामेव प्रयोगो वाल्मीकिना कृत इत्युच्येत, कुलस्य सन्तानार्थञ्चेत्येतदेकं वाक्यमपि पुत्रलाभार्थको यज्ञ इत्येवंपरतया व्याख्याय भारतीयेषु पुत्रस्यैव पुन्नाम्नो नरकात् त्रायमाणस्य प्राधान्येन परलोकसुखप्राप्तावपि तस्यैव हेतुभूतत्वाच्च कन्यो-

त्पत्तावपि पुत्राभावे व्यसनं स्वाभाविकमिति समर्थनमिष्येत च, तथापि रामायणे प्रकरणान्तरे कुत्रापि शान्तावृत्तान्तानुल्लेखात् स्पष्टतया दशरथस्य पुत्रीत्यप्यनभिधानात् सनत्कुमारवाक्ये दशरथवाक्ये चाङ्गाधिराजस्य पुत्रीत्येव प्रतिपादनेन जनकत्वसम्बन्धस्य हरिवंशानुरोधेन रोमपाद एव सम्भवाच्च। गोविन्दराजस्य प्रमाणाप्रदर्शनेन स्वोक्तार्थे स्वयमविश्वसतो विपरीतव्याख्यानं कदाचिदुत्तररामचरितस्यावलोकनादर्थान्तरवर्णन-मावश्यकमुत्प्रेक्षमाणस्य न संमाननामर्हति। रामवर्मदर्शितरीत्या तु शान्ताया नप्तकदुहितृत्वेन दशरथगृहे प्राधान्यमपि सङ्गच्छत इति युक्तमुत्पश्यामः। एवञ्च सख्यं सम्बन्धकञ्चैव' (११-१८) त्यत्र रोमपाददशरथयोः शान्ताद्वारक एव सम्बन्धः प्रतीयत इत्यपि न्याय्यमेव। तस्मात्प्रमा-णानुपलम्भेऽपि विरोधिपक्षे दूषणाविष्काराद् रामवर्मण उक्तिर्ज्या-यसीति नात्र विवादस्यावसरः। भवभूतिस्तु हरिवंशविरोधपरिहाराय काल्पनिकीं कथामवलम्ब इत्युपपन्नमेव, नाटकेऽनेन कथाभेदेन कस्यापि विशिष्टप्रयोजनस्यानिष्पत्त्या रसपरिपोषाय कथां विपर्यास्थदिति वक्तु-मशक्यत्वात्। अत एव चम्पूरामायणे 'सम्बन्धिनं मुनिमानीये'त्यत्र संबंधं सख्यलक्षणं व्याचक्षाणा उपेक्षणीयाः। हरिवंशरामायणयोरङ्गदेशीयराज-वंशानुक्रमे परं विरोधो दुर्निवार एवेति शम्॥

---

संस्कृत-साहित्य-परिषत्, वार्षिकमूल्यम्—रूप्यकत्रयम् ३)
श्यामबाजार, कलिकाता। Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

Printed at the Calcutta Oriental Press, Ltd.,
9, Panchanan Ghose Lane, Calcutta.

तीरोपकण्ठे सलिले कृतज्ञो
　　　नदीं स्वधात्रीमिव पर्युपास्ते ॥२३॥
क्वचिद् विहङ्गध्वनिभिर्मनोज्ञैः
　　　संशब्दितानां महतां तरूणाम् ।
समन्ततो गाढतरप्रतानैः
　　　प्रतीयते कोऽपि सजीवभावः ॥२४॥
शुकोच्चयाः किंशुकपादपेषु
　　　फुल्लप्रसूनेषु दलैकवर्णाः ।
स्वजातियोग्यं रवमादधाना-
　　　स्तेनैव विज्ञेयपदं श्रयन्ते ॥२५॥
तत्पादपानां शुकतुल्यतायाः
　　　शुकाः किमित्येव हि संशयः स्यात् ।
अतोऽत्र किं किंशुक इत्यभिख्या
　　　योगेन धात्रा विहिताऽधिलोकम् ॥२६॥
विशाल-तालीवनशीर्षलग्नाः
　　　कठोरशब्दाः कुरराभिधानाः ।
सर्वं दिगन्तं प्रतियाममेव
　　　शब्दापयन्ते पुररक्षितुल्याः ॥२७॥
तमालवृक्षः शिखिशोभिताग्रो
　　　वातध्वनद्वेणुगताग्रशाखः ।
वृन्दावने सूरसुतातटान्ते
　　　वंशीकरः कृष्ण इवावभाति ॥२८॥
यावत् समीरः स्वबलादधस्ताद्
　　　वंशाग्रभागान् नमयत्यमुष्मिन् ।
तावन्न शक्तः स्वनतिं विषोढुं
　　　समुत्कटं क्रोशति वंशकुञ्जः ॥२९॥

विहङ्गमारोपितवीजयोगात्
क्षितिप्ररूढाः फलपुष्पवृक्षाः ।
वितीर्य तेभ्यः फलपुष्पजातं
कृतज्ञतामात्मगतां वदन्ति ॥३०॥

प्रतिप्रसूनं भ्रमरा भ्रमन्तः
सन्तोषतः पुष्परसं पिबन्तः ।
मत्ता इवास्पष्टरसं सृजन्तो
दिग्भ्रान्तवत् सर्वदिशः श्रयन्ते ॥३१॥

अमी समाहृत्य तृणानि यत्ना-
न्निर्माय नीतानि परःशतानि ।
विहङ्गमा वृक्षदलान्तराले
वसन्ति वर्षातपदुःखमुक्ताः ॥३२॥

समुल्लसत्तूलफलप्रताना
वृद्धा इवैते पलितोत्तमाङ्गाः ।
समुन्नताः शाल्मलयः स्वपुष्पै
रक्तैर्विचित्रां श्रियमुद्वहन्ते ॥३३॥

अत्यल्पमात्रेऽपि वयस्यतीते
वृक्षान्तराग्रेषु मरुत्प्रभावात् ।
सन्दृश्यमानं पलितं न शक्तं
वृद्धत्वसाध्यानुमितौ सदोषम् ॥३४॥

पुष्पेषु रागो बत वार्द्धकेऽपि
तत्पादपे शाल्मलिनामधेये ।
वयोऽनुसारेण विवर्ति शीलम्
इति व्यवस्थां शिथिलीकरोति ॥३५॥

समीपजातेषु बहुद्रुमेषु
तत्तूलयोगात् पलितं गतेषु ।

संसर्गजा दोषगुणा भवन्ती-

त्येतद्वचः सार्थकतां वृणीते ॥३६॥

जलोपकण्ठस्थितपादपेषु

शीर्षे स्थितैः श्वेतवकैरसंख्यैः ।

विशेषबुद्धिः सुतरां विलुप्ता

दूरादनाशङ्कितविग्रहेषु ॥३७॥

श्रेणीप्रबन्धेन नभोगतानां

विहङ्गमानां वकसारसानाम् ।

मालेव चित्रा प्रकृतेरसूत्रा

शून्ये परामेव रुचं तनोति ॥३८॥

अदूरतो गाढवनान्तराला-

च्छार्दूलरावः श्रुतिमेति भीमः ।

सुदुर्बलानां परितः पशूनाम्

आक्रोशतामार्तिभृतस्वरश्च ॥३९॥

क्वचिन्मृगं व्याघ्रवरः पिपासुं

नीरोपकण्ठे पुलिने निषण्णं

वेगात् समुत्पत्य समीपकुञ्जात्

पृष्ठेन धृत्वा सहसा प्रतस्थे ॥४०॥

अतीत्य बह्वीं वनभूमिमेते

समागता दूरतमं प्रदेशम् ।

पश्चान्निरीक्षस्व घनप्रचारान्

महीभृतः श्रेणिगताननतीतान् ॥४१॥

एते धरण्या वरणोपमानाः

प्रसूनकाद्यैरिव रत्नबद्धाः ।

एषा नदी तत्परिखेव बाह्या

विभाति हिंस्रैर्बहुभिः प्रकीर्णा ॥४२॥

सवल्लिवृक्षा तटभूमिरेषा
क्रमेण पश्चाद् विशतीव वेगात् ।
गतिर्जलस्याप्यनुकूलभावा
तरीप्रयाणावगतिं निरुन्धे ॥४३॥

क्षणे क्षणे घोररवा वराहा
धावन्त्यमी दूरमतीव वेगात् ।
ऋक्षाश्च भीमाकृतयः सरोषा
भयानकैरेव रवैश्चरन्ति ॥४४॥

सुधूम्रवर्णा महिषाः कुतश्चिन्
मदान्विता भीषणदीर्घशृङ्गाः ।
विदारयन्ते धरणिं तटान्ते
समेत्य रोषादतिरक्तनेत्राः ॥४५॥

शाखामृगाः केचन दग्धवक्त्रा
लाङ्गूलवन्तः प्रतिवृक्षशीर्षम् ।
समुत्पतन्तः फलमाहरन्तो
विदग्धतां स्वां प्रतिपादयन्ते ॥४६॥

क्षुद्राः प्लवङ्गाः सभया महद्भ्यो
दूरेण वृक्षोपरि सञ्चरन्ति ।
समैः समं सम्पतितैरभिन्ने
लक्ष्ये सरावं कलहं श्रयन्ते ॥४७॥

केचित् पुनः कौतुकिनः प्रकामं
वृक्षाग्रभागात सलिले पतित्वा ।
मुहुर्मुहुस्तीरतरूञ् श्रयन्तः
स्वकौतुकं सार्थकतां नयन्ति ॥४८॥

नीरान्तिकस्थेषु महीरुहेषु
पादैः समाकृष्टरसेष्वमीषु ।